श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीवेदपुरुषायनमः ॥
गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ॥ पंचैतान् संस्मरन्नित्यं वेद
वाणीं प्रवर्तयेत्॥ अथानुवाकसूत्रम्॥ इषेत्वैका, वसोःपवित्रंतिस्रो,
ऽग्नेव्रतपतेसप्त, पवित्रेस्थोद्वे, शर्म्मासितिस्रो, धृष्टिरसिशर्म्मासि
द्विकौ, देवस्यत्वातिस्रो, देवस्यत्वापंच, प्रत्युष्टꣳरक्षस्तिस्रो, दशै
कत्रिꣳशत् ॥ हरिःॐइषेत्त्वा ॥ इषेत्त्वोर्ज्जेत्त्वाव्वायवस्त्थदेवोवः
सविताप्प्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्प्यायद्ध्वमघ्न्याऽइन्द्राय

भागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनईशतमाघशंᳪसोध्रुवा
ऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ [ १ ]
वसोःपवित्रम् ॥ वसोःपवित्रमसिद्यौरसिपृथिव्यसिमातरिश्वनो
घर्म्मोसिविश्वधाऽअसि ॥ परमेणधाम्नादृᳪहस्वमाह्वार्म्मातेय
ज्ञपतिर्ह्वार्षीत् ॥ २ ॥ वसोःपवित्रम् ॥ वसोःपवित्रमसिशतधारं
वसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रे
णशतधारेणसुप्वाकामधुक्षः ॥ ३ ॥ साविश्वायुः ॥ साविश्वा

युꣳसाविश्वकर्म्मासाविश्वधायाः ॥ इन्द्रस्यत्त्वाभागꣳसोमेना
तनज्मिविष्णोहव्यꣳरक्ष ॥ ४ ॥ [ २ ] अग्नेव्रतपते । व्रतञ्चरि
ष्यामितच्छकेयन्तन्मेराध्यताम् ॥ इदमहमनृतात्सत्यमुपैमि
॥ ४ ॥ कस्त्वा । युनक्तिसत्त्वायुनक्तिकस्मैत्वायुनक्तितस्मैत्वा
युनक्ति ॥ कर्म्मणेवांवेषायवाम् ॥ ६ ॥ प्रत्युष्टꣳरक्षः ॥ प्रत्युष्टꣳर
क्षःप्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः ॥ उर्वन्तरि
क्षमन्वेमि ॥ ७ ॥ धूरसि । धूर्वधूर्वन्तंधूर्वतंयोस्मान्धूर्वतितंधू

वयंवयन्धूर्वामः ॥ देवानामसिवह्नितमᳪसस्नितमम्पप्रितमञ्जुष्टं तमन्देवहूतमम् ॥ ८ ॥ अन्हुतमसि । हविर्द्धानन्दᳪहंस्वमाह्वाम्मा तेयज्ञपतिर्ह्वार्षीत् ॥ विष्णुस्त्वाक्रमतामुरुवातायापहतᳪरक्षो यच्छन्तामपञ्च ॥ ९ ॥ देवस्यत्वा । सवितुःप्रसवेश्विनोर्बाहुभ्यां म्पूष्णोहस्ताभ्याम् ॥ अग्नयेजुष्टङ्गृह्णाम्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि ॥ १० ॥ भूतायत्वा ॥ भूतायत्वानारातयेस्वरभिविख्येषन्दᳪहन्तान्दुर्य्याःपृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौ

सादयाम्म्यदित्याऽउपस्त्थेऽग्ग्नेहव्यꣳरक्ष ॥ ११ ॥ [ ७ ] पवित्रेस्थꣳ ॥ पवित्रेस्त्थोवैष्णव्यौसवितुर्व्वः प्रसवऽउत्पुनाम्म्यच्छिद्रेण पवित्रेणसूर्य्यस्यरश्मिभिः ॥ देवीरापोऽअग्ग्रेगुवोऽअग्ग्रेपुवोऽग्ग्रऽइममद्ययज्ञन्नयताग्ग्रेयज्ञपतिꣳसुधातुंय्यज्ञपतिन्देवयुवम् ॥ १२ ॥ युष्म्माइन्द्रः ॥ युष्म्माऽइन्द्रोवृणीतवृत्रतूर्य्येयूयमिन्द्रमवृणीध्वं वृत्रतूर्य्येप्प्रोक्षितास्त्थ ॥ अग्ग्नयेत्वाजुष्टम्म्प्रोक्षाम्म्यग्ग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥ दैव्यायकर्म्मणेशुन्धद्ध्वन्देवयज्ज्यायैय

द्रोशुंद्धाः॑पराजग्मुरिदंवस्तच्छुंन्धामि ॥ १३ ॥ [ २ ] शर्म्मा
सि॥ शर्म्मास्यवंधूतह्रक्षोवंधूताऽअरांतयोदित्यास्त्वगंसिप्प्रतित्वा
दितिर्वेत्तु ॥ आद्रिरसिवानस्प्पत्योग्रावांसिपृथुबुंध्नःप्प्रतित्वादित्या
स्त्वग्ग्वेत्तु ॥ १४ ॥ अग्नेस्तनूः ॥ अग्नेस्तनूरंसिवाचोविसर्ज्जन
न्देववीतयेत्वागृह्णामिबृहद्ग्रावासिवानस्प्पत्त्यःसऽइदन्देवेब्भ्योह
विःशंमीष्ष्वसुशमिशमीष्ष्व ॥ हविष्कृदेहिहविष्कृदेहि ॥ १५ ॥
कुक्कुटोसि ॥ कुक्कुटोसिमधुंजिह्वऽइषमूर्ज्जमावंदत्वयांवयःसंङ्घातः

संङ्घातञ्जेष्मवर्षवृद्धमसिप्रतित्वावर्षवृद्धंवेत्तुपरापूतꣳरक्षःपरापू
ताऽअरातयोपहतꣳरक्षोवायुर्वोविविनक्तुदेवोवःसविताहिरण्यपा
णिःप्रतिगृभ्णात्वच्छिद्रेणपाणिना ॥ १६ ॥ [ ३ ] धृष्टिरसि ॥
धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहिनिष्क्रव्यादꣳसेधादेवयजंवह ॥
ध्रुवमसिपृथिवीन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामि
भ्रातृव्यस्यवधाय ॥ १७ ॥ अग्नेब्रह्म । गृभ्णीष्वधरुणमस्यन्त
रिक्षन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्य

वधायं॥ धत्रमसि दिवन्दृꣳह ब्रह्मवनि त्वाक्षत्रवनि सजातवन्युपदं
धामि भ्रातृव्यस्य वधायं ॥ विश्वाभ्यस्त्वाशाभ्य उपंदधामि चि
तस्स्थोर्द्ध्वचितो भृगूणामङ्गिरसान्तपंसा तप्यद्धम्॥ १८॥ [२] शर्मा
सि॥ शर्म्मास्यवधूतꣳरक्षोवधूता अरातयोदित्यास्त्वगसि प्प्रतित्वा
दितिर्वेत्तु॥ धिषणासि पर्वती प्प्रतित्वादित्यास्त्वग्वेत्तु दिवस्कम्भ
नीरसि धिषणासि पार्वतेयी प्प्रतित्वा पर्वती वेत्तु धान्यमसि ॥ १९ ॥
धान्यमसि । धिनुहि देवान्प्राणायत्त्वोदानायत्वा व्यानायत्वा ॥

दीर्घामनुप्प्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्प्रति
गृब्भ्णात्वाच्छिद्द्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ २० ॥ [३]
देवस्यत्त्वा । सवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥
संव्वपामिसमापऽओषधीभिः समोषधयोरसेन ॥ सꣳरेवतीर्ज्जगती
भिः पृच्यन्ताꣳसम्मधुमतीर्म्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥
जनयत्त्यैत्त्वा ॥ जनयत्त्यैत्त्वासंय्यौमीदमग्नेरिदमग्नीषोमयो
रिषेत्वाघर्म्मोसिव्विश्वायुरुरुप्प्रथाऽउरुप्प्रथस्वोरुतेयज्ञपतिः प्प्रथ

तामग्निष्ठेत्त्वचम्माहिं᳖सीर्हेवस्त्वासविताश्श्रपयतुव्वर्षिष्ठेधिनाकें ॥ २२ ॥ माभेर्ं ॥ माभेम्मासंविक्थाऽअतमेरुर्य्यज्ञोतमेरुर्यजं ॥ २३ ॥ [ ३ ] मानस्यप्रजाभूयात्रितायत्वाद्वितायत्वैकतायत्वा ॥ २३ ॥ [ ३ ] देवस्यत्वा । सवितुःप्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददेद्धरकृतन्देवेभ्यऽइन्द्रस्यबाहुरसिदक्षिणंसहस्रभृष्टिंशततेजावायुरसितिग्मतेजाद्विषतोवधः ॥ २४ ॥ पृथिविदेवयजानि ॥ पृथिविदेवयजन्योषध्यास्तेमूलम्माहिं᳖सिषंव्व्रजङ्गच्छगोष्ठानंवर्षं

तुतेद्यौर्वधानदेवसवितःपरमस्याम्पृथिव्याᳪशतेनपाशैर्योस्मा
न्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक् ॥ २५ ॥ अपाररुम् ॥
अपाररुम्पृथिव्यैदेवयजनाद्वध्यासंव्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौर्वधा
नदेवसवितःपरमस्याम्पृथिव्याᳪशतेनपाशैर्योस्मान्द्वेष्टियञ्चव
यन्द्विष्मस्तमतोमामौक् ॥ अररोदिवम्मापप्तोद्रप्सस्तेद्याम्मा
स्कन्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौर्वधानदेवसवितःपरमस्याम्पृथि
व्याᳪशतेनपाशैर्योस्मान्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक्

॥ २६ ॥ गायत्रेणत्वा ॥ गायत्रेणत्वाच्छन्दंसापरिंगृह्णामित्रैष्टु
भेनत्वाच्छन्दंसापरिंगृह्णामिजागंतेनत्वाच्छन्दंसापरिंगृह्णामि ॥
सुक्ष्माचासिंशिवाचांसिस्योनाचासिंसुपदांचास्यूर्ज्जंस्वतीचासिप
यंस्वतीच ॥ २७ ॥ पुराक्रूरस्यं। विसृपोंविरप्शिन्नुदादायंपृथिवी
ञ्जीवदांनुम् ॥ यामैरंयँश्चन्द्रमंसिस्वधाभिस्तामुधीरांसोऽअनुदि
श्यंयजन्ते ॥ प्रोक्षंणीरासांदयद्विषतोवधोसि ॥ २८ ॥ [ ५ ]
प्रत्युंष्टहरक्षंः ॥ प्रत्युंष्टहरक्षुःप्रत्युंष्टाअरांतयोनिष्टप्तहरक्षोनिष्ट

प्ताअरांतयः ॥ अनिंशितोसिसपत्नक्षिद्वाजिनंत्वावाजेध्यायैस म्मांर्ज्मि ॥ प्रत्युंष्टुंहरक्षःप्रत्युंष्टाऽअरांतयोनिष्टप्तुंहरक्षोनिष्टप्ता ऽअरांतयः॥अनिंशितासिसपत्नक्षिद्वाजिनीन्त्वावाजेध्यायैसम्मा र्ज्मि ॥२९॥ आदित्यैरास्ना । सिविष्णोर्वेष्योस्यूर्ज्जे त्वादब्धेनत्वा चक्षुषावंपश्यामि ॥ अग्नेर्जिह्वासिंसुहूर्देवेभ्योधाम्नेधाम्नेमेभव यजुंषेयजुषे॥३०॥सवितुस्त्वा । प्प्रसवऽउत्पुंनाम्म्यच्छिद्रेणपवित्रे

१ टीपः--वेष्पोसि इति काण्वानां पाठः । तत्संहिताभाष्ये छांदसः पकारादेश इति सायनाचार्योक्तेः । माध्यंदिनीयानां तु वेष्योसि इति पाठः । अत्र उवटमही-धरादिभाष्यकारैः पकारादेशस्यानुक्तेः ।

णसूर्य्यस्यरश्मिभिः॥सवितुर्व्वःप्रसवऽउत्पुनाम्म्यच्छिद्रेणपवि
त्रेणसूर्य्यस्यरश्मिभिः ॥ तेजोसिशुक्रमस्यमृतमसिधामनामासि
प्प्रियन्देवानामनाधृष्टन्देवयजनमसि॥ ३१ ॥[ ३ ]इतिश्रीवाजस
नेयसंहितायांप्रथमोऽध्यायः॥१॥श्रीवेदपुरुषाय नमः। अनुवाकसू
त्रम्॥कृष्णोसिषड,ग्नेवाजजिन्तिस्रो,मयीद,मग्नीषोमयोः पंचका,
वग्नेदब्धायोचतस्रः, संवर्चसापंचा, ग्नयेकव्यवाहनायषट् सप्तचतु
स्त्रिꣳशत्॥हरिःॐकृष्णोसि॥ कृष्णोस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रो

क्षामिवेदिरसि बर्हिषेत्वाजुष्टम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्ट
म्प्रोक्षाम्म्यदित्यैव्युन्दनम् ॥१॥ अदित्यैव्युन्दनमसिविष्णोस्तुपो
स्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्थान्देवेभ्योभुवपतयेस्वाहाभुव
नपतयेस्वाहा भूतानाम्पतयेस्वाहा ॥ २ ॥ गन्धर्वस्त्वा। विश्वावसुः
परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥
इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्नि
रिडऽईडितः ॥ मित्रावरुणौत्त्वोत्तरतःपरिधत्तान्ध्रुवेणधर्म्मणावि

श्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ ३ ॥ व्वीतिहोत्रन्त्वा । कवेद्युमन्तꣳसमिधीमहि ॥ अग्नेबृहन्तमद्ध्वरे ॥ ४ ॥ समिदसि ॥ समिदसिसूर्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्यै ॥ सवितुर्ब्बाहूस्त्थऽऊर्णम्म्रदसन्त्वास्तृणामिस्वासस्थन्देवेभ्यऽआत्वाव्वसवोरुद्राऽआदित्याःसदन्तु ॥ ५ ॥ घृताच्यसि । जुहूर्नाम्नासेदम्प्रियेणधाम्नाप्प्रियꣳसदऽआसीदघृताच्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्नाप्प्रियꣳसदऽआसीदघृताच्यसिद्ध्रुवानाम्नासेदम्प्रियेण

धाम्नांप्प्रियꣳसदुऽआसीदप्प्रियेणधाम्नांप्प्रियꣳसदुऽआसीद ॥ ध्रु
वाऽअंसदन्नृतस्ययोनौताविष्णोपाहिपाहियज्ञम्पाहियज्ञपतिंपा
हिमांयज्ञन्न्यम् ॥ ६ ॥ [ ६ ] अग्नेवाजजित् ॥ अग्नेवाजजिद्वा
जन्त्वासरिष्यन्तंवाजजितꣳसम्मार्ज्मि ॥ नमोदेवेभ्यःस्वधापि
तृभ्यःसुयमेमेभूयास्तमस्कन्नमद्य ॥ ७ ॥ अस्कन्नमद्य । देवेभ्य
ऽआज्यꣳसम्भ्रियासमङ्घ्रिणाविष्णोमात्वावक्रमिषंवसुमतीम
ग्नेतेच्छायामुपस्थेषंविष्णोस्त्थानमसीतऽइन्द्रोवीर्य्यमकृणोदू

च्छौँच्छुरऽआस्त्थांत् ॥ ८ ॥ अग्ग्नेवेः ॥ अग्ग्नेर्व्वेहौँत्रंव्वेर्द्दुत्त्यमवंतान्त्वा
न्द्यावांपृथिवीऽअवत्त्वन्द्यावांपृथिवीस्विंष्टकृद्देवेब्भ्युऽइन्द्रऽआज्ज्यें
नहुविषांभूत्स्वाहाुसञ्ज्योतिंषाुज्योतिंः ॥ ९ ॥ [ ३ ] मयीदम् ॥
मयीदमिन्द्रंऽइन्द्रियन्दंधात्त्वस्मान्न्रायोमघवांनःसचन्ताम् ॥ अ
स्माकंसन्त्वाशिषंः सत्त्यानंः सन्त्वाशिषुऽउपंहूतापृथिवीमाता
पमाम्पृथिवीमाताह्वंयतामग्निराग्नींद्ध्रात्स्वाहां ॥ १० ॥ उपंहूता
द्यौः ॥ उपंहूतोद्यौष्पितोपमान्द्यौष्पिताह्वंयतामग्ग्निराग्नींद्ध्रा

त्स्वाहा ॥ देवस्यंत्वासवितुःप्प्रसवेश्श्विनोर्बाहुब्भ्याम्पूष्णोहस्ता
ब्भ्याम् ॥ प्रतिंगृह्णाम्म्यग्ग्नेष्ठ्वास्येनप्प्राश्न्नामि ॥ ११ ॥ एतन्ते । देव
सवितर्य्यज्ञम्प्राहुर्वृहस्प्पतयेब्रह्मणे ॥ तेनंयज्ञमंवतेनयज्ञपंतिन्ते
नमामंव ॥ १२ ॥ मनोजूतिः ॥ मनोजूतिर्ज्जुषतामाज्ज्यंस्यवृहस्प्प
तिर्य्यज्ञमिमन्तंनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइह
मादयन्तामोꣳम्प्रतिष्ठ ॥ १३ ॥ एषाते ॥ ऽअग्नेसमित्तयावर्द्धस्वचा
चप्प्यायस्व ॥ वर्द्धिषीमहिंचवयमाचंप्प्यासिषीमहि ॥ अग्नेवाज

जिह्वाजन्त्वासुसुवाꣳसंव्वाजुजितꣳसम्मार्ज्जिम ॥१४॥ [५] अग्नी
षोमयोरुज्जितिम् ॥ अग्नीषोमयोरुज्जितिमनूज्जेषंव्वाजस्यमाप्प्रसवे
नप्प्रोहामि ॥ अग्नीषोमौतमपनुदतांय्योस्मान्द्वेष्टियञ्चव्वयन्द्वि
ष्मोव्वाजस्यैनम्प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषंव्वाज
स्यमाप्प्रसवेनप्प्रोहामि ॥ इन्द्राग्नीतमपनुदतांय्योस्मान्द्वेष्टियञ्च
व्वयन्द्विष्मोव्वाजस्यैनम्प्रसवेनापोहामि ॥ १५ ॥ वसुभ्यस्त्वा ।
रुद्रेभ्यस्त्वादित्येभ्यस्त्वासञ्जानाथान्द्यावापृथिवीमित्रावरुणौ

त्वावृष्ट्यावताम् ॥ व्यन्तुवयोक्तꣳरिहाणामरुताम्पृषतीर्गच्छवशा
पृश्निर्भूत्वादिवङ्गच्छततोनोवृष्टिमावह ॥ चक्षुष्पाऽअग्नेसिचक्षु
र्म्मेपाहि ॥ १६ ॥ यम्परिधिम् ॥ यम्परिधिम्पर्य्यधत्थाऽअग्नेदेवप
णिभिर्गुह्यमानः ॥ तन्तऽएतमनुजोषम्भराम्येषनेत्त्वदपचेतया
ताऽअग्नेःप्रियम्पाथोपीतम् ॥ १७॥ सꣳस्रवभागास्त्थेषाबृहन्त
ःप्रस्तरेष्ठाःपरिधेयाश्चदेवाः ॥ इमांवाचमभिविश्वेगृणन्तऽआस
द्यास्मिन्बर्हिषिमादयध्वꣳस्वाहावाट् ॥ १८॥ घृताचीस्त्थः ॥ घृ

ताचीस्त्थोधुर्व्यौपात॑सुम्नेस्त्थं॒सुम्नेमाधत्तम् ॥ यज्ञनमेश्रुत
ऽउपचयज्ञस्यशिवेसन्तिष्ठस्वस्विष्टेमेसन्तिष्ठस्व ॥ १९ ॥ [५] अग्ने
द॒धायो । शीतमपाहिमादिद्योः पाहिप्प्रसित्यैपाहिदुरिष्ट्यैपाहिदु
रद्म्न्याऽअविषन्नः पितुङ्कृणुसुषदायोनौस्वाहावाडग्नयेसंवेशपतये
स्वाहासरस्वत्यैयशोभगिन्यैस्वाहा ॥ २० ॥ वेदोसि ॥ वेदोसियेनत्व
न्देववेददेवेभ्योवेदोभवस्तेनमह्यंवेदोभूयाः ॥ देवागातुविदोगातु
वित्वागातमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः ॥ २१ ॥

सम्बर्हिः ॥ सम्बर्हिरङ्क्ताᳪंहविषाघृतेनसमादित्यैर्वसुभिᳪंसम्मरु
द्भिः॥समिन्द्रोविश्वदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा॥२२॥
कस्त्वा ॥ कस्त्वाविमुञ्चतिसत्वाविमुञ्चतिकस्मैत्वाविमुञ्चतित
स्मैत्वाविमुञ्चति ॥ पोषायरक्षसाम्भागोसि ॥ २३ ॥ [ ४ ] संवर्च्च
सा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासᳪंशिवेन॥त्वष्टासु
दत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥२४॥ दिविविष्णुः ॥
दिविविष्णुर्व्यक्रᳪंस्तजागतेनच्छन्दसाततोनिर्भक्तोयोस्मा

न्द्वेष्ट्यिञ्च्वयन्द्विष्मोन्तरिक्षेविष्णुर्व्यक्रंस्तत्रैष्टुभेनच्छन्दसा
ततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्विष्मःपृथिव्यांविष्णुर्व्य
क्रंस्तगायत्रेणच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्वि
ष्मोस्मादन्नादस्यैप्रतिष्ठायाऽअगन्मस्वः सञ्ज्योतिषाभूम ॥२५॥
स्वयम्भूरसि॥स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्चोदाऽअसिवर्चोमेदेहि ॥
सूर्य्यस्यावृतमन्वावर्त्ते ॥२६॥ अग्नेगृहपते । सुगृहपतिस्त्वयाग्ने
हङ्गृहपतिनाभूयासꣳ सुगृहपतिस्त्वम्मयाग्नेगृहपतिनाभूयाः ॥

अस्त्थूरिणौगार्हपत्त्यानिसन्तुशतꣳहिमाःसूर्य्यस्यावृतमन्वावर्त्ते ॥ २७ ॥ अग्नेव्व्रतपते । व्व्रतमचारिषन्तदशकन्तन्मेराधीदमहंय्यऽएवास्म्मिसोस्म्मि ॥ २८ ॥ [ ५ ] अग्नयेकव्व्यवाहनायस्वाहासोमायपितृमतेस्वाहा ॥ अपहताऽअसुरारक्षाꣳसिव्वेदिषदः ॥ २९ ॥ येरूपाणि । प्प्रतिमुञ्चमानाऽअसुराःसन्तःस्वधयाचरन्ति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्म्मात् ॥ ३० ॥ अत्रपितरः ॥ अत्रपितरोमादयद्ध्वंय्यथाभागमावृषायद्ध्वम् ॥ अमीमद

न्तापितरोयथाभागमावृषायिषत ॥ ३१ ॥ नमोवऽपितरोरसायनं
मोवऽपितरऽशोषायनमोवऽपितरोजीवायनमोवःपितरःस्वधायै
नमोवःपितरोघोरायनमोवःपितरोमन्न्यवेनमोवऽपितरःपितरोन
मोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्म्मैतद्वःपितरोवासऽआ
धंत्त ॥ ३२ ॥ आधत्त । पितरोगर्ब्भंकुमारम्पुष्करस्रजम् ॥ यथेह
पुरुषोसत् ॥ ३३ ॥ ऊर्ज्जम्वहन्तीः ॥ ऊर्ज्जम्वहन्तीरमृतंघृतम्पय
ःकीलालंपरिस्रुतम् ॥ स्वधास्त्थतर्प्पयतमेपितॄन् ॥ ३४ ॥ [ ६ ]

इतिश्रीवाजसनेयसंहितायांद्वितीयोऽध्यायः ॥ २ ॥ श्रीवेदपुरुषा
यनमः ॥ अनुवाक्सूत्रम् । समिधाग्निम्, भूर्भुवःस्वश्चतुष्का, वाग्नि
र्ज्योतिर्द्वे, उपप्रयन्तःषड्विꣳशतिः, भूर्भुवःस्वश्चतस्रो, गृहामातिस्रः,
प्प्रघासिनः पंच, पूर्णादर्विद्वे, ऽअक्षन्नमीमदन्तषडे, षते सप्त, दश
॥ १० ॥ त्रिषष्टिः ॥ हरिः ॐ समिधाग्निम् ॥ समिधाग्निन्दुवस्य
तघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ १ ॥ सुसमिद्धा
यशोचिषे । घृतन्तीव्रञ्जुहोतन ॥ अग्नयेजातवेदसे ॥ २ ॥ तन्त्वा ॥

सुमिद्भिरङ्गिरोघृतेनंवर्द्धयामसि ॥ बृहच्छोचायविष्ठय ॥ ३ ॥ उ
पंत्वा । ग्नेहुविष्मतीर्घृताचीर्य्यन्तुहर्य्यत ॥ जुषस्वंसमिधोमम
॥४॥ [४] भूर्भुवं÷ ॥ भूर्भुवःस्वुर्द्यौरिवभुम्नापृथिवीवंवरिम्णा ॥
तस्यास्तेपृथिविदेवयजनिपृष्ठेग्निमंन्नादमन्नाद्यायादधे॥५॥आयम॥
आयङ्गौःपृश्निरक्रमीदसंदन्मातरंम्पुरः ॥ पितरञ्चप्रयन्त्स्व÷ ॥६॥
अन्तश्चरति ॥ रोचनास्यप्राणादंपानती ॥ व्यंक्ख्यन्महिषोदिवम्
॥ ७ ॥ त्रिंशद्धामं ॥ त्रिंशद्धामविराजतिवाक्पतङ्गायधीयते ॥ प्र

तिवस्तोरहद्युभिं॥ ८ ॥[४] अग्निर्ज्योतिः॥ अग्निर्ज्योतिर्ज्यो
तिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा॥अग्निर्वर्च्चोज्यो
तिर्वर्च्चःस्वाहासूर्य्योवर्च्चोज्योतिर्वर्च्चःस्वाहा ॥ ज्योतिःसूर्य्यःसू
र्य्योज्योतिःस्वाहा ॥ ९ ॥ सजूर्देवेन । सवित्रासजूरात्र्येन्द्रवत्या ॥
जुषाणोऽअग्निर्वेतुस्वाहा ॥ सजूर्देवेनसवित्रासजूरुषसेन्द्रवत्या ॥
जुषाणःसूर्य्योवेतुस्वाहा ॥ १० ॥[ २ ] उपप्प्रयन्तोऽअद्ध्वरम् ॥ उप
प्प्रयन्तोऽअद्ध्वरम्मन्त्रंवोचेमाग्नये ॥ आरेऽअस्म्मेचशृण्वते ॥ ११ ॥

अग्निर्म्मूर्द्धा। दिवश्ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसि जिन्वति ॥ १२ ॥ उभावाम् ॥ उभावामिन्द्राग्नीऽआहुवध्याऽउभा राधसᳬसहमादुयध्यै ॥ उभादातारावुिषाᳬरयीणामुभावाजस्यसा तयेहुवेवाम् ॥ १३ ॥ अयन्ते ॥ अयन्तेयोनिर्ऋत्वियोयतोजातोऽअ रोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ १४ ॥ अय मिह। प्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यः ॥ यमप्न वानोभृगवोविरुरुचुर्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥ १५ ॥ अस्यप्प्रत्नाम् ॥

अस्यप्रत्नामनुद्युतꣳशुक्रन्दुदुह्रेऽअह्रयः ॥ पयःसहस्रसामृषि
म् ॥ १६ ॥ तनूपाऽअग्नेसितन्वम्मेपाह्यायुर्दाऽअग्नेस्यायुर्म्मेदेहिव
र्च्चोदाऽअग्नेसिवर्च्चोमेदेहि ॥ अग्नेयन्मेतन्वाऽऊनन्तन्मऽआपृण
॥ १७ ॥ इन्धानास्त्वा । शतꣳहिमाद्युमन्तꣳसमिधीमहि ॥ वयस्व
न्तोवयस्कृतꣳसहस्वन्तꣳसहस्कृतम् ॥ अग्नेसपत्नदम्भनमदब्धासो
ऽअदाभ्यम् ॥ चित्रावसोस्वस्तितेपारमशीय ॥ १८ ॥ सन्त्वम् ॥
सन्त्वमग्नेसूर्य्यस्यवर्च्चसागथाःसमृषीणाꣳस्तुतेन ॥ सम्प्रियेणधा

म्म्नासमहमायुंषासंवर्च्चसासम्प्रजयासंᳶरायस्पोषेणग्मिषीय।१९।
अन्धंस्त्थ॥अन्धस्त्थान्धोंवोभक्षीयमहंस्थमहोंवोभक्षीयोर्ज्जस्त्थो
र्ज्जंवोभक्षीयरायस्प्पोषंस्त्थरायस्प्पोषंवोभक्षीय ॥ २० ॥ रेवंतीरमं
द्ध्वम् ॥ रेवंतीरमंद्ध्वमस्म्मिन्न्योनांवस्म्मिन्न्गोष्ठेस्म्मिँल्लोकेस्म्मिन्क्ष
यें ॥ इहैवस्तमापंगात् ॥ २१ ॥ सᳶहितासिं । विश्वरूप्यूर्ज्जामाविंश
गौपत्त्येनं ॥ उपंत्त्वाग्नेदिवेदिंवेदोषावस्तर्द्धियावयम् ॥ नमोभरंन्त
ऽएमंसि॥२२॥राजंन्तमद्ध्वराणांङ्गोपामृतस्यदीदिंविम्॥वर्द्धंमानᳶं

॥ १६

स्वेदसे ॥ २३ ॥ सनः ॥ सनः पितेवसूनवेग्नेसूपायनोभव ॥ सचस्वा
नःस्वस्तये॥२४॥अग्नेत्त्वम्॥अग्नेत्त्वन्नोअन्तमऽउतत्राताशिवोभ
वाव्वरूत्थ्यः ॥ वसुरग्निर्वसुश्रवाऽअच्छानक्षिद्युमत्तमꣳरयिन्दाः
॥ २५ ॥ तन्त्वा ॥ तन्त्वाशोचिष्ठदीदिवः सुम्नायनूनमीमहेसखि
भ्यः ॥ सनोबोधिश्रुधीहवमुरुष्याणोऽअघायतः समस्मात्
॥२६॥इडऽएहि॥इडएह्यदितऽएहिकाम्म्याऽएत॥मयिवःकामध
रणम्भूयात्॥२७॥सोमानꣳस्वरणं। कृणुहिब्रह्मणस्पते॥ कक्षीवं

न्तंऽय॑ऽऔ॒शि॒जः॥२८॥ योरे॑वान्॥ योरे॒वान्योऽअ॑मीव॒हाव॑सु॒वित्पु॑ष्टि॒वर्द्ध॑नः॥ सनः॑सिषक्तु॒यस्तु॒रः॥२९॥ मानः॑॥ मानः॒शꣳसो॒ऽअर॑रुषो धू॒र्तिः प्र॒णङ्मर्त्य॑स्य॥ रक्षा॑णोब्रह्मणस्पते॥३०॥ महि॒त्रीणा॑म्॥ महि॒त्रीणा॒मवो॑स्तुद्यु॒क्षम्मि॒त्रस्या॑र्य॒म्णः॥ दु॒रा॒धर्षं॒वरु॑णस्य॥३१॥ न॒हि तेषा॑म्॥ न॒हि॒तेषा॑म॒मा॒च॒नना॑ध्वसु॒वार॒णेषु॥ ईशे॑रि॒पुरघशꣳसः॥३२॥ तेहि॒पु॒त्रासो॒ऽअदि॑तेः॒प्रजी॒वसे॒मर्त्या॑य॥ ज्योति॒ऽर्यच्छ॒न्त्यजस्र॑म्॥३३॥ क॒दा॒च॒न॥ स्त॒रीर॑सि॒नेन्द्र॑सश्च॒सिदा॒शुषे॥

उपोपेन्नुमंघव्न्भूयऽइन्नुतेदानंन्देवस्यंपृच्यते ॥ ३४ ॥ तत्संवितुः ॥
तत्संवितुर्वरेण्यम्भर्ग्गोदेवस्यंधीमहि॥धियोयोनं÷प्रचोदयात् ३५
शतम् १०० ॥ परितेदूडभोरथोस्म्मॉ२अंश्नोतुविश्वतं÷ ॥ येनरक्ष
सिदाशुषं÷ ॥ ३६ ॥ [२६] भूर्भुवं÷ ॥ भूर्भुवःस्व÷सुप्रजाःप्रजा
भिं÷स्याᳬसुवीरोव्वीरैःसुपोषःपोषैः ॥ नर्य्यंप्रजाम्मेपाहिशᳬस्य
पशून्मेपाह्यथर्य्यपितुम्पाहि ॥ ३७॥ आगंन्म। व्विश्ववेदसमस्म्म
भ्यंवसुवित्तंमम॥अग्नेसम्म्राडभिद्युम्न्नमभिसहऽआयंच्छस्व३८

अयमग्निः ॥ अयमग्निर्गृहपतिर्गार्हपत्यः प्प्रजायांवसुवित्तमः ॥
अग्ग्नेगृहपतेभिद्युम्म्नमभिसह ऽआयंच्छस्व ॥ ३९ ॥ अयमग्निः ॥ अ
यमग्निःपुरीष्ष्योरयिमान्पुष्टिवर्द्धनः ॥ अग्ग्नेपुरीष्ष्याभिद्युम्म्नम
भिसह ऽआयंच्छस्व ॥ ४० ॥ [४] गृहामा । बिभीतमावेपद्ध्वमूर्ज्जंम्बि
भ्भ्रंत ऽएमसि ॥ ऊर्ज्जम्बिभ्भ्रद्वःसुमनाः सुमेधागृहानैमिमनसामो
दमानः ॥ ४१ ॥ येषामध्येति । प्प्रवसन्न्येषुसौमनसोबहुः ॥ गृहानुपह्व
यामहेतेनोजानन्तुजानतः ॥ ४२ ॥ उपहूता ऽइह । गाव ऽउपहूता ऽ

अजावयं॥अथोऽअन्नस्यकीलालऽउपहूतोगृहेषुनः॥क्षेमायवःशा
न्त्यैप्रपद्येशिवःशग्मःशंय्योःशंय्योः॥४३॥[३]प्रघासिनोहवाम
हे।मरुतश्चरिशादसः॥करम्भेणसजोषसः॥४४॥यद्ग्रामे॥यद्ग्रामेय
दरण्येयत्सभायांय्यदिन्द्रिये॥यदेनश्चकृमावयमिदन्तदवयजा
महेस्वाहा॥४५॥मोषूणः॥मोषूणऽइन्द्रात्रपृत्सुदेवैरस्तिहिष्मा
तेशुष्मिन्नवयाः॥महश्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोव
न्दतेगीः॥४६॥अक्रन्कर्मकर्मकृतःसहवाचामयोभुवा॥देवे

ऽभ्युश्कर्म्मकृत्त्वास्तम्प्रेतंसचाभुवः॥४७॥अवंभृथनिचुम्पुण।नि
चेरुरंसिनिचुम्पुणः॥ अवंदेवैर्देवकृतमेनोंयासिषमवमत्यैर्म्मर्त्त्यंकृ
तम्पुरुराव्णोदेवरिषस्प्पाहि॥४८॥[५] पूर्ण्णांदर्वि॥ पूर्ण्णादर्व्विपरा
पतसुपूर्ण्णांपुनरापत। वस्नेवविक्रीणावहाऽइषमूर्ज्जंशतक्रतो ४९
देहिमे॥ देहिमेददामितेनिमेधेहिनितेदधे॥ निहारंव्वहरासिमेनि
हारन्निहराणितेस्वाहा॥५०॥ अक्षन्नमीमदन्त॥ अक्षन्नमीमदन्तह्य
वंप्प्रियाऽअंधूषत॥ अस्तोषतस्वभानवोविप्प्रानविंष्ठयामतीयोजा

न्विन्द्रतेहरी॥५१॥सुसन्दृशन्त्वा॥ सुसन्दृशन्त्वाव्वयम्मघवन्वन्दि
षीमहि ॥ प्रनूनम्पूर्णबन्धुरस्तुतोयासिवशाँ २ ऽअनुयोजान्विन्द्रते
हरी ॥ ५२ ॥ मनोनु ॥ मनोन्वाह्वामहेनाराशꣳसेनस्तोमेन ॥ पि
तृणाञ्चमन्मभिः॥ ५३ ॥ आनः ॥ आनऽएतुमनः पुनः क्रत्वेदक्षा
यजीवसे ॥ ज्योक्चसूर्यन्दृशे ॥५४॥ पुनर्नः पितरोमनोददातुदैव्यो
जनः ॥ जीवंव्रातꣳसचेमहि ॥ ५५ ॥ व्वयꣳसोमव्रतेतवमनस्तनूषु
बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ५६ ॥ एषते । रुद्रभागः सहस्व

स्वाम्बिकयातञ्जुषस्वस्वाहैषतैरुद्रभागऽआखुस्तेपशुः ॥ ५७ ॥ अ
वरुद्रम् ॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् ॥ यथानोवस्यसस्कर
द्यथानःश्रेयसस्करद्यथानोव्यवसाययात् ॥ ५८ ॥ भेषजमसि ।
भेषजङ्गवेश्वायपुरुषायभेषजम् ॥ सुखम्मेषायमेष्यै ॥ ५९ ॥ त्र्यं
म्बकंय्यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृ
त्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंय्यजामहेसुगन्धिम्पतिवेदनम् ॥
उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्ते । रुद्राव

सन्तेनंपरोमूजंवतोतीहि ॥ अवततधन्वापिनाकावसःक्त्तिवासाऽ
अहिंᳫसन्नःशिवोतीहि ॥ ६१ ॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्या
युषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥ शिवोनाम ॥
शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिᳫसीः ॥ निव
र्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवी
र्य्याय ॥ ६३ ॥ १० ॥ [७] इतिश्रीवाजसनेयसंहितायांतृतीयोऽ
ध्यायः ॥ ३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ एदंद्वे, मही

नाम्पयश्चतस्र, आकूत्या, ऋक्सामयो, द्विकौ, व्रतंकृणुतषडे, षते
चतस्रो, वस्व्यासितिस्र, एपतेद्वे, शुक्रंत्वाचतस्रोदित्यास्त्वगष्टौ,
दशसप्तत्रिᳬंशत् ॥ १० ॥ हरिःॐ एदम् ॥ एदमंगन्मदेवयजंनम्पृ
थिव्यायत्रदेवासोऽअजुंषन्तविश्वे ॥ ऋक्सामाभ्यांᳬसन्तरन्तोय
जुर्भीरायस्पोषेणसमिषामदेम ॥ इमाऽआपᳬशमुमेसन्तुदेवीरो
षधेत्रायस्वस्वधितमैनᳬहिᳬसीः ॥ १ ॥ आपोऽअस्मान् ॥ आपोऽ
अस्मान्मातरंःशुन्धयन्तुघृतेननोघृतप्प्वंःपुनन्तु ॥ विश्वᳬहि

रिप्प्रम्प्रवहन्तिदेवीरुदिदाभ्य्यः शुचिरापूतऽएंमि ॥ दीक्षातपसोस्त
नूरंसितान्त्वाशिवाᳫशग्ग्माम्परिदधेभद्द्रंवर्णम्पुष्ष्यंन् ॥ २ ॥ [२]
महीनाम्पयः ॥ महीनाम्पयोसिव्वर्च्चोदाऽअंसिव्वर्च्चोमेदेहि ॥ वृत्र
स्यासिकनीनकश्चक्षुर्द्दाऽअसिचक्षुर्म्मेदेहि ॥३॥ चित्पतिर्म्मा ॥ चि
त्पतिर्म्मापुनातुव्वाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्द्रेण
पवित्त्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्त्रपूतस्ययत्त्का
मःपुनेतच्छकेयम् ॥ ४ ॥ आवः ॥ आवोदेवासऽईमहेव्वामम्प्रंयु

त्यूद्धरे ॥ आवोदेवासऽआशिषोयज्ञियासोहवामहे ॥ ५ ॥ स्वाहा
यज्ञम् ॥ स्वाहायज्ञंमनसःस्वाहोरोरन्तरिक्षात्स्वाहाद्यावापृथिवी
भ्याᳬस्वाहावातादारभेस्वाहा ॥६॥ [४] आकूत्यैप्प्रयुजे ॥ आकू
त्यैप्प्रयुजेग्नयेस्वाहामेधायैमनसेग्नयेस्वाहादीक्षायैतपसेग्नयेस्वा
हासरस्वत्यैपूष्णेग्नयेस्वाहा ॥ आपोदेवीर्बृहतीर्विश्वशम्भुवोद्या
वापृथिवीऽउरोऽअन्तरिक्ष ॥ बृहस्पतयेहविषाविधेमस्वाहा ॥७॥
विश्वोदेवस्य ॥ विश्वोदेवस्यनेतुर्म्मर्तोवुरीतसख्यम् ॥ विश्वोरायऽइषु

द्धातिद्युम्नंवृणीतपुष्यसेस्वाहा॥८॥[२]ऋक्क्सामयोऽशिल्पे॥ऋ
क्क्सामयोऽशिल्पेस्त्थस्तेवामारंभेतेमापातमास्ययज्ञस्योदृचं॥
शर्म्मासि शर्म्ममेयच्छनमंस्तेऽअस्तुमामाहिᳫसीः ॥ ९ ॥ ऊर्ग्गा
सि ॥ ऊर्ग्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्ज्जंमयिधेहि ॥ सोमस्यनीविरसि
विष्णोऽशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुसस्याःकृषी
स्कृधि ॥ उच्छ्रयस्ववनस्पतऽऊर्द्ध्वोमापाह्यᳫहसऽआस्ययज्ञस्यो
दृचं ॥ १० ॥ [२] व्रतङ्कृणुत। व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञोवन

स्प्पतिर्य्युज्ञियः॥ दैवीन्धियम्म्मनामहेसुमृडीकामभिष्टयेवर्च्चोधां
य्युज्ञवाहसꣳसुतीर्थानोऽअसद्वशे ॥ येदेवामनोजातामनोयुजोद
क्षक्रतवस्तेनोवन्तुतेनःपान्तुतेभ्युःस्वाहा ॥११॥ श्वात्राःपीताः॥
श्वात्राःपीताभवतयूयमापोऽअस्म्माकमन्तरुदरेसुशेवाः॥ ताऽअ
स्म्मभ्यमयक्ष्म्माऽअनमीवाऽअनागसःस्वदन्तुदेवीरमृताऽऋता
वृधः॥ १२ ॥ इयन्ते। यज्ञियातनूरपोमुञ्चामिनप्प्रजाम् ॥ अꣳ
होमुचःस्वाहाकृताऽपृथिवीमाविशतपृथिव्यासम्भव ॥१३॥ अग्ने

त्वम् ॥ अग्ग्नेत्वꣳसुजागृहिव्वयꣳसुमन्दिषीमहि ॥ रक्षाणोऽअप्प्रयु
च्छन्प्प्रबुधेनःपुनस्कृधि ॥१४॥ पुनर्म्मनः ॥ पुनर्म्मनःपुनरायुर्म्मऽ
आगन्पुनः प्राणःपुनरात्मामऽआगन्पुनश्चक्षुःपुनःश्श्रोत्रम्मऽ
आगन् ॥ वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्न्नः पातुदुरितादवद्यात्
॥१५॥ त्वमग्ग्ने। व्व्रतपाऽअसिदेवऽआमर्त्येष्ष्वा॥त्वंय्यज्ञेष्ष्वीड्यः
॥ रास्वेयत्सोमाभूयोभरदेवोनः सविताव्वसोर्द्दाताव्वस्वदात् ॥ १६ ॥
[ ६ ] एषातेशुक्क्रतनूरेतद्वर्च्चस्तयासम्भवभ्भ्राजङ्गच्छ ॥ जूरसिधृता

मनसाजुष्टाविष्णवे॥ १७॥तस्यास्ते।सत्यसवसःप्प्रसवेतन्वोयन्त्र मशीयस्वाहा ॥ शुक्रमसिचन्द्रमस्यमृतमसिवैश्वदेवमसि ॥ १८ ॥ चिदसि । मनासिधीरसिदक्षिणासिक्षत्त्रियासियज्ञियास्यदितिरस्यु भयतःशीर्ष्णी ॥ सानःसुप्प्राचीसुप्प्रतीच्येधिमित्रस्त्वापदिबध्नी तात्पूषाध्वनस्प्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥ अनुत्वामातामन्यता मनुपितानुभ्भ्रातासगर्भ्यौनुसखासयूत्थ्यः ॥ सादेविदेवमच्छेही न्द्रायसोमःरुद्रस्त्वावर्त्तयतुस्वस्तिसोमसखापुनरेहि ॥ २० ॥ [४]

व्वस्व्व्यंसि ॥ व्वस्व्व्युस्यदितिरस्यादित्त्यासिरुद्द्रासिंचन्द्रासि ॥ बृहस्प्प
तिंष्ट्वासुम्म्नेरंम्म्णातुरुद्द्रोव्वसुंभिराचंके ॥ २१ ॥ अदित्त्यास्त्वा । मु
र्द्धन्नाजिंघर्म्मिदेवयजंनेपृथिव्व्याऽइडायास्प्पदमंसिघृतवत्स्वाहा ॥
अस्म्मेरंमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायोमायव्वँरायस्प्पोषेणवि
यौष्म्मतोतोरायं÷ ॥ २२ ॥ समक्ख्ये । देव्व्याधियासन्दक्षिणयोरु
चंक्षसा ॥ मासऽआयुंःप्प्रमोषीर्म्मोऽअहन्तवंव्वीरंविदेयतवंदेविसन्दृ
शि ॥ २३ ॥ [३] एषते । गायत्त्रोभागऽइतिमेसोमायब्रूतादेषतेत्त्रै

ष्टुंभोभागऽइतिमेसोमांयब्रूतादेुषतेजागंतोभागऽइतिमेसोमांयब्रू
ताच्छन्दोनामानाᳬसाम्म्राज्ज्यङ्गच्छेतिमेसोमांयब्रूतादास्म्माको
सिशुक्रस्तेग्ग्रहयोंविचितंस्त्वाविचिंन्वन्तु ॥ २४ ॥ अभित्त्यम् ॥ अ
भित्त्यन्देवᳬसंवितारंमोण्योः कविक्रंतुमच्चौंमिसत्त्यसंवᳬरत्नधा
माभिप्प्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वायस्यामतिर्भाऽअदिंद्युतत्त्सवींमनि
हिरंण्ण्यपाणिरमिमीतसुक्रतुः कृपास्वंः ॥ प्रजाब्भ्यंस्त्वाप्प्रजास्त्वा
नुप्प्राणन्तुप्प्रजास्त्वमंनुप्प्राणिंहि ॥ २५ ॥ [२] शुक्रन्त्वा । शुक्रे

णंक्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन ॥ सग्ग्मेतेगोरस्म्मेतेचन्द्रा
णितपसस्तनूरसिप्रजापतेर्वर्ण्णः÷परमेणपशुनाक्रीयसेसहस्रपोष
म्पुंषेयम् ॥ २६ ॥ मित्रोनः÷ ॥ मित्रोनऽएहिसुमित्रधऽइन्द्रस्योरु
माविशदक्षिणमुशन्नुशन्तꣳस्योनःस्योनम् ॥ स्वानभ्राजाङ्घारेब
म्भारिहस्तसुहस्तकृशानवेतेवः÷सोमक्रयणास्तान्रक्षध्वम्मावोदभन्॥
॥ २७ ॥ परिमा । ग्नेदुश्चरिताद्बाधस्वामासुचरितेभज ॥ उदायुषा
स्वायुषोदस्थाममृताँऽअनु ॥ २८ ॥ प्रतिपन्थाम् ॥ प्रतिपन्थामप

झाहिस्वस्तिगामनेहसम् ॥ येनविश्वाःपरिद्विषोवृणक्तिविन्दतेवसु
॥ २९ ॥ [४] अदित्यास्त्वक् ॥ अदित्यास्त्वगस्यदित्यैसदऽआसी
द ॥ अस्तभ्नाद्यांवृषभोऽअन्तरिक्षममिमीतवरिमाणम्पृथिव्याः॥
आसीदद्विश्वाभुवनानिसम्म्राड्विश्वेत्तानिवरुणस्यव्रतानि ॥ ३० ॥
वनेषुवि ॥ वनेषुव्युन्तरिक्षन्ततानवाजमर्वत्सुपयऽउस्त्रियासु ॥ हृ
त्सुक्रतुंवरुणोविक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौ ॥ ३१ ॥ सू
र्य्यस्यचक्षुः ॥ सूर्य्यस्यचक्षुरारोहाग्नेरक्ष्णःकनीनकम् ॥ यत्रैतशे

भिरीयंसेभ्राजमानोविपश्चिता ॥ ३२ ॥ उस्त्रावेतम् ॥ उस्त्रावेतन्धूर्षाहौयुज्येथामनश्रूऽअवीरहणौब्रह्मचोदनौ॥स्वस्तियजमानस्य गृहान्गच्छतम् ॥ ३३ ॥ भद्रोमे । सिष्पन्धयंवस्वभुवस्पतेविश्वान्यभिधामानि ॥ मात्वापरिपरिणोविदन्मात्वापरिपन्थिनोविदन्मा त्वावृकाऽअघायवोविदन्॥श्येनोभूत्वापरापतयजमानस्यगृहान्गच्छतन्नौसँस्कृतम् ॥ ३४ ॥ नमोमित्रस्य ॥ नमोमित्रस्यवरुणस्यच क्षंसेमहोदेवायतदृतꣳसपर्य्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पु

ऋायसूर्य्यांयशङ्सत ॥३५॥ वरुणस्योत्तम्भनम् ॥ वरुणस्योत्तम्भन
मसिवरुणस्यस्कम्भसर्ज्जनीस्त्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽ
ऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६ ॥ याते ॥ यातेधा
मानिहविषायजन्तितातेविश्वापरिभूरस्तुयज्ञम् ॥ गयस्फानः प्प्र
तरणःसुवीरोवीरहाप्प्रचरासोमदुर्य्यान् ॥ ३७ ॥ [८] इतिश्रीवाज
सनेयसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥ श्रीवेदपुरुषायनमः ॥ अनुवा
कसूत्रम् अग्नेस्तनू, रापतयेचतुष्कौ, तप्तायनीद्वे, इन्द्रघोषस्तिस्रो,

युंजतेष्टौ, देवस्यत्वाचतस्रो, देवस्यत्वापंच, विभूरसिचतस्रो, ज्योति
रसिषड्डुरुविष्णोतिस्रो, दशत्रिचत्वारिंशत॥हरिः ॐअग्नेस्तनूः॥
अग्नेस्तनूरसिविष्णवेत्त्वासोमस्यतनूरसिविष्णवेत्त्वातिथेराति
त्थ्यमसिविष्णवेत्त्वाश्येनायेत्त्वासोमभृतेविष्णवेत्त्वाग्नयेत्त्वारा
यस्पोषदेविष्णवेत्त्वा ॥१॥ अग्नेर्ज्जनित्रम् ॥ अग्नेर्ज्जनित्रमसिवृष
णौस्त्थऽउर्वश्यस्यायुरसिपुरूरवाऽअसि॥गायत्रेणत्त्वाच्छन्दसाम
न्थामित्रैष्टुभेनत्त्वाच्छन्दसामन्थामिजागतेनत्त्वाच्छन्दसामन्था

मि॥२॥भवतन्नऽ॥भवतन्नुऽसमनसौसचेतसावरेपसौ॥ मायज्ञꣳहिꣳ
सिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमुद्यनः॥३॥अग्नावग्निश्॥
अग्नावग्निश्चरतिप्प्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ॥ सनः
स्योनश्सुयजायजेहदेवेभ्योहव्यꣳसदमप्प्रयुच्छन्त्स्वाहा॥४॥[४]
आपतयेत्त्वा ॥ आपतयेत्त्वापरिपतयेगृह्णामितनूनप्त्रेशाक्वरायश
क्क्नऽओजिष्ठाय ॥ अनाधृष्टमस्यनाधृष्ष्यन्देवानामोजोनभिश
स्त्यभिशस्तिपाऽअनभिशस्तेन्यमञ्जसासत्त्यमुपगेषꣳस्वितेमा

धाऽ॥५॥ अग्ग्नेव्व्रतपाऽ॥ अग्ग्नेव्व्रतपास्त्वेव्व्रतपा यातवतनूरियᳬसाम
यियोममतनूरेषासात्वयि ॥ सहनौव्व्रतपतेव्व्रतान्यनुमेदीक्षान्दी
क्षापतिर्म्मन्यतामनुतपस्तपस्पतिः॥६॥ अᳬशुरᳬशुष्टे। देवसोमा
प्प्यायतामिन्द्रायैकधनविदे॥ आतुब्भ्यमिन्द्रः प्प्यायतामात्त्वमि
न्द्रायप्प्यायस्व ॥ आप्प्याययास्म्मान्त्सखीन्त्सन्न्यामेधयास्वस्ति
तेदेवसोमसुत्त्यामशीय॥ एष्टारायः प्प्रेषेभगायऽऋतमृतवादिब्भ्यो
नमोद्यावापृथिवीब्भ्याम् ॥ ७॥ याते ॥ यातेऽअग्ग्नेयᳬशयातनूर्व

पिंष्ठागह्वरेष्ठा ॥ उग्रंवचोऽअपांवधीत्त्वेषंवचोऽअपांवधीत्स्वाहा ॥
यातेऽअग्नेरजःशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥ उग्रंवचोऽअपांवधीत्त्वेषं
वचोऽअपांवधीत्स्वाहा ॥ यातेऽअग्नेहरिशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥
उग्रंवचोऽअपांवधीत्त्वेषंवचोऽअपांवधीत्स्वाहा ॥८॥ [४] तप्ताय
नीमे ॥ तप्तायंनीमेऽसिवित्तायंनीमेस्यवतान्मानाथितादवतान्मा
व्यथितात् ॥ विदेदग्निर्नभोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहियो
स्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वादधेविदेदग्निर्न

भोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहियोद्वितीयस्याम्पृथिव्याम
सियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वादधेविदेदग्निर्नभोनामाग्नेऽअ
ङ्गिरऽआयुनानाम्नेहियस्तृतीयस्याम्पृथिव्यामासियत्तेनाधृष्टन्ना
मयज्ञियन्तेनत्त्वादधे ॥ अनुत्वादेववीतये ॥ ९ ॥ सिᳫंहयसि ॥ स
पत्नसाहीदेवेभ्यःकल्पस्वसिᳫंहयसिसपत्नसाहीदेवेभ्यःशु
न्धस्वसिᳫंह्यसिसपत्नसाहीदेवेभ्यःशुम्भस्व ॥ १० ॥ [२] इन्द्र
घोषस्त्वा॥इन्द्रघोषस्त्वावसुभिःपुरस्तात्पातुप्रचेतास्त्वारुद्रैःपश्चा

त्पातुमनोजवास्त्वापितृभिर्द्दक्षिणतःपातुव्विश्वकर्म्मात्त्वादित्त्यैरु
त्तरतःपात्विदमहन्तप्तंव्वार्व्वहिर्द्धायज्ज्ञान्निःसृजामि ॥ ११ ॥ सिꣳ
ह्यासि ॥ सिꣳह्यासिस्वाहासिꣳह्यस्यादित्यवनिःस्वाहासिꣳह्यासिब्र
ह्मवनिःक्षत्रवनिःस्वाहासिꣳह्यासिसुप्प्रजावनीरायस्पोषवनिꣳ
स्वाहासिꣳह्यस्यावहदेवान्यजमानायस्वाहाभूतेभ्यस्त्वा ॥ १२ ॥
ध्रुवोसि । पृथिवीन्दृꣳहध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसिदिव
न्दृꣳहाग्नेःपुरीषमसि ॥ १३ ॥ [ ३ ] युञ्जतेमनः ॥ युञ्जतेमनऽउ

तयुंञ्जतेधियोविप्रावि्प्रस्यबृहतोविपश्चितः ॥ विहोत्राँदधेवयुना विदेकऽइन्महिदेवस्यंसवितुःपरिष्टुतिःस्वाहा ॥१४॥ इदंविष्णुः॥ इदंविष्णुर्विचंक्रमेत्रेधानिदंधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ १५ ॥ इरांवतीधेनुमती ॥ इरांवतीधेनुमतीहिभूतꣳसूयवसिनीम नंवेदशस्या ॥ व्यंस्कभ्नारोदंसीविष्णावेतेदाधर्थपृथिवीमभितोम यूखैःस्वाहा ॥ १६ ॥ देवश्रुतौदेवेषु ॥ देवश्रुतौदेवेष्वाघोषतम्प्रा चीप्प्रेतमध्वरङ्कल्पयंन्तीऽऊर्ध्वंय्यज्ञन्नंयतम्माजिह्वरतम् ॥ स्वङ्गो

ष्ठमावेदतन्देवीदुर्व्वेऽआयुम्मांनिवींदिष्टम्प्रजाम्मानिवींदिष्टमत्रेर
मेथांवर्ष्मंन्पृथिव्याः॥१७॥विष्णोर्नु। कंवीर्य्याणिप्प्रवोचंयःं
पार्थिवानिविममेरजांᳪसि ॥ योऽअस्कंभायदुत्तरᳪसधस्थंविचक्र
माणस्त्रेधोरुगायोविष्णवेत्वा ॥ १८॥ दिवोवा । विष्णऽउतवापृ
थिव्यामहोवाविष्णऽउरोरन्तरिक्षात्॥उभाहिहस्तावसुनापृणस्वा
प्रयच्छदक्षिणादोतसव्याद्विष्णवेत्त्वा ॥१९॥ प्रतत् ॥ प्रतद्विष्णु
स्तवतेवीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः॥यस्योरुषुत्रिषुविक्रम

णेष्व्वाधिक्षियन्ति भुवनानिव्विश्वा ॥२०॥ व्विष्णोर्रराटम् ॥ व्विष्णो
र्रराटमसिव्विष्णोऽश्नप्त्रेस्थोव्विष्णोः स्यूरसिव्विष्णोर्द्ध्रुवोसि ॥ व्वै
ष्णवमसिव्विष्णवेत्त्वा ॥ २१ ॥ [ ८ ] देवस्यत्त्वा । सवितुः प्प्रसवे
श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ आददेनार्य्यसीदमहꣳरक्ष
साङ्ग्रीवाऽअपिकृन्तामि ॥ बृहन्नसिबृहद्द्रवाबृहतीमिन्द्रायव्वाचंव्वद
॥ २२ ॥ रक्षोहणंव्वलगहनम् ॥ रक्षोहणंव्वलगहनंव्वैष्णवीमिदमह
न्तंव्वलगमुत्किरामियम्मेनिष्ट्योयममात्त्योनिचखानेदमहन्तंव्वल

गमुत्किरामियम्मेंसमानोयमसमानोनिचखानेदमहन्तंवलगमु
त्किरामियम्मेसबन्धुर्य्यमसबन्धुर्निचखानेदमहन्तंवलगमुत्किरा
मियम्मैसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ २३ ॥ स्व
राडसि। सपत्नहासत्त्रराडस्यभिमातिहाजनराडसिरक्षोहासर्व्वराड
स्यमित्रहा ॥ २४ ॥ रक्षोहणोवः ॥ रक्षोहणोवोवलगहनम्प्रोक्षा
मिवैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवो
वलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाऽउपदधामिवै

ष्णुवीरक्षोहणौवांबलगहनौपप्यूँहामिवैष्णवीवैष्णवमसिवै
ष्णुवास्थ ॥ २५ ॥ [४] देवस्यंत्त्वा । सवितुऽप्प्रंसवेश्विनोर्बाहुभ्याम्
म्पूष्णोहस्ताभ्याम् ॥ आददेनार्य्यसीदमहꣳरक्षंसाङ्ग्रीवाऽअपिकृ
न्तामि ॥ यवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्त्वान्तरिक्षायत्त्वा
पृथिव्यैत्त्वाशुन्धन्ताँल्लोकाऽपितृषदनाःपितृषदनमसि ॥ २६ ॥
उद्दिवंम् ॥ उद्दिवंꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्यान्द्युतान
स्त्वामारुतोमिनोतुमित्रावरुणौध्रुवेणधर्म्मणा ॥ ब्रह्मवनित्त्वाक्ष

अ॒व॒नि॒रा॒य॒स्प्पो॒ष॒व॒नि॒प॒र्य्यू॑हामि ॥ ब्र॒ह्म॒दृ॒ꣳह॒क्ष॒त्र॒न्दृ॒ꣳहा॒यु॑र्दृ॒ꣳह॒प्प्र॒जान्दृ॒ꣳह ॥ २७ ॥ ध्रु॒वासि॑ । ध्रु॒वो॒यं॒य्य॒ज॒मा॒नो॒स्मि॒न्ना॒य॒त॑ने॒प्प्र॒जया॑प॒शुभि॑र्भूयात् ॥ घृ॒तेन॑द्यावापृथि॒वी॒पू॒र्य्ये॒था॒मि॒न्द्र॒स्य॒च्छ॒दि॒र॑सि वि॒श्व॒ज॒न॒स्य॒च्छा॒या ॥ २८ ॥ परि॑त्वा । गि॒र्व॒णो॒गि॒र॑ऽइ॒मा॒भ॑वन्तु वि॒श्वत॑÷ ॥ वृ॒द्धा॒यु॒म॒नु॒वृ॒द्ध॑यो॒जु॒ष्टा॒भ॒व॒न्तु॒जु॒ष्ट॑यः ॥ २९ ॥ इन्द्र॑स्य॒स्यू॒र॒सी॒न्द्र॒स्य॒ध्रु॒वो॒सि ॥ ऐ॒न्द्र॒म॑सि॒वै॒श्व॒दे॒व॒म॑सि ॥ ३० ॥ [५] वि॒भू॒र॑सि । प्प्र॒वा॒ह॒णो॒व॒ह्नि॑र॒सि॒ह॒व्य॒वा॒ह॑नः ॥ श्वा॒त्रो॒सि॒प्प्र॒चे॑ता॒स्तु॒थो॒सि

द्विश्ववेदाऽउशिगसि ॥ ३१ ॥ उशिगसि । कविरङ्घारिरसिबम्भारि
रवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्जालीयंः सम्राडसिकृशानुःप
रिषद्योसिपवमानोनभोसिप्रतक्वामृष्टोसिहव्यसूदनऽऋतधामा
सिस्वर्ज्योतिःसमुद्रोसि ॥ ३२ ॥ समुद्रोसि । विश्वव्यचाऽअजो
स्येकपादहिरसिबुध्न्योवागस्यैन्द्रमसिसदोस्यृतस्यद्वारौमामासन्ता
प्तमध्वनामध्वपतेप्रमातिरस्वस्तिमेस्मिन्पथिदेवयानेभूयान्मित्र
स्यमा ॥ ३३ ॥ मित्रस्यमा । चक्षुषेक्षध्वमग्नयःसगराःसगरास्थ

सगरेणनाम्नारौद्रेणानीकेनपातमाग्नयहंपिपृतमाग्नयोगोपायतं
मानमौवोस्तुमामाहिꣳसिष्ट ॥ ३४ ॥ [४] ज्योतिरसि ॥ विश्वरू
पंविश्वेषान्देवानाꣳसमित् ॥ त्वꣳसोमतनूकृद्भ्योद्वेषोभ्योन्यकृते
भ्यऽउरुयन्तासिवरूथꣳस्वाहाजुषाणोऽअप्तुराज्यंस्यवेतुस्वाहा
॥ ३५ ॥ शतम् २०० ॥ अग्नेनय । सुपथारायेऽअस्मान्विश्वानि
देववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽ
उक्तिंविधेम ॥ ३६ ॥ अयन्नः ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्त्वय

न्मृधं÷पुरएंतुप्प्रभिन्दन् ॥ अयंव्वाजांञ्जयतुव्वाजंसातावुयᳪंशत्रूंञ्ज
यतुजर्हृषाणᳪंस्वाहा ॥ ३७ ॥ उरुविंष्णोविक्क्रमस्वोरुक्षयांयन
स्कृधि ॥ घृतंघृंतयोनेपिबप्प्रप्प्रंय्यज्ञपतिन्तिरस्वाहा ॥ ३८ ॥ देव
सवितᳪं ॥ देवंसवितरेषतेसोमस्तᳪंरंक्षस्वमात्वांदभन् ॥ एतंत्वन्देंव
सोमदेवोदेवाँ२ऽउपांगाऽइदमहम्मंनुष्ष्यान्त्सहरायस्पोषेणस्वा
हानिर्व्वरुणस्यपाशान्मुच्च्ये ॥ ३९ ॥ अग्ग्नेंव्व्रतपाᳪं ॥ अग्ग्नेव्व्रतपास्त्वे
व्व्रतपायातवंतनूम्मंय्यंभूदेषासात्वयियोममंतनूस्त्वय्यभूंदियᳪं

सामयि ॥ यथायुथन्नौव्रतपतेव्रतान्यनुमेदीक्षान्दीक्षापतिरम॑ꣳ
स्तानुतपुस्तपस्प्पतिः ॥ ४० ॥ [६] उरुविष्णो ॥ उरुविष्णोविक्क्र
मस्वोरुक्षयायनस्क्रधि ॥ घृतङ्घृतयोनेपिवप्प्रप्प्रयज्ञपतिन्तरस्वाहा
॥ ४१ ॥ अत्त्यन्न्यान् ॥ अत्त्यन्न्याँ२ऽअगान्नान्न्याँ२ऽउपागामर्वा
क्त्वापरेब्भ्योविदम्परोवरेब्भ्यः ॥ तन्त्वाजुषामहेदेववनस्प्पतेदेव
यज्ज्यायैदेवास्त्वादेवयज्ज्यायैजुषन्तांविष्णवेत्त्वा ॥ ओषधेत्त्रायस्व
स्वधितेमैनꣳहिꣳसीः ॥ ४२ ॥ द्याम्मा ॥ द्याम्मालेखीरन्तरिक्ष

स्माहि꣡ꣳसीऽपृथिव्यासम्भंव ॥ अयꣳहित्वास्वधिंतिस्तेतिजानऽप्प्र
णिनायमहतेसौभंगाय ॥ अतस्त्वन्देंववनस्प्पतेशतवंल्शोविरोह
सहस्रंवल्शाविवयꣳरुहेम ॥ ४३ ॥ [३] १० ॥ इतिश्रीवाजसनेय
संहितायांपंचमोऽध्यायः ॥ ५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्
सूत्रम्॥ देवस्यत्त्वाषडुपावीरासिपंचमाहिःषट्संतेतिस्त्रःसमुद्रंगच्छह
विष्मतीर्द्विकौद्ददेत्वापंचदेवस्यत्वाष्टौसप्तत्रिꣳशत् ॥ हरिः ॐदेव
स्यंत्वा। सवितुःप्प्रंसवेश्विनौर्बाहुभ्यांम्पूष्णोहस्ताभ्याम् ॥ आदं

देनाऽऽय्यैँसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि॥यवोसियवयास्मद्द्वे
षोयवयारातीर्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँल्लोकाः
पितृषदनाःपितृषदनमसि ॥ १ ॥ अग्ग्रेणीरसि । स्वावेशऽउन्नेतृणा
मेतस्यव्वित्तादधित्वास्थास्यतिदेवस्त्वासवितामद्ध्वानक्क्तुसुपिप्पला
भ्यस्त्वौषधीब्भ्यः ॥ द्यामग्ग्रेणास्पृक्षऽआन्तरिक्षम्मद्ध्येनाप्प्राःपृ
थिवीमुपरेणादृꣳहीः ॥ २ ॥ याते ॥ यातेधामान्युश्मसिगमद्ध्यैय
त्रगावोभूरिशृङ्गाअयासः ॥ अत्राहतदुरुगायस्यव्विष्णोःपरमम्प

दमवेंभासिभूरिं ॥ ब्रह्मवनिंत्त्वाक्षत्रवनिंरायस्पोषवनिंपर्य्यूहामिं ॥ ब्रह्मंदृꣳहक्षत्रन्दृꣳहायुर्दृꣳहप्रजान्दृꣳह ॥ ३ ॥ विष्णोः कर्म्माणि । पश्यतयतोव्रतानिंपस्पशे ॥ इन्द्रस्ययुज्यः सखा ॥ ४ ॥ तद्विष्णोंः । परमम्पदꣳसदांपश्यन्तिसूरयंः ॥ दिवीवचक्षुरातंतम् ॥ ५ ॥ परिवीरंसि ॥ परिवीरंसिपरिंत्त्वादेवीर्विशोव्ययन्तान्परीमंय्यजंमानꣳरायोमनुष्याणाम् ॥ दिवःसूनुरंस्येषतेपृथिव्यांल्लोकऽआरण्यस्तेपशुः ॥ ६ ॥ [ ६ ] उपावीरंसि ॥ उपावीरस्युपंदेवान्दैवीर्

विशःप्रागुरुशिजोवह्निहितमान् ॥ देवंत्वष्टर्वसुरमहव्यातेस्वदन्ता
म् ॥ ७ ॥ रेवतीरमध्वम् ॥ रेवतीरमध्वम्बृहस्पतेधारयावसूनि ॥
ऋतस्यत्वादेवहविःपाशेनप्रतिमुञ्चामिधर्षामानुषः ॥ ८ ॥ देवस्य
त्वा । सवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अग्नी
षोमाभ्याञ्जुष्टन्नियुनज्मि ॥ अद्भ्यस्त्वौषधीभ्योनुत्वामातामन्य
तामनुपितानुभ्रातासगर्भ्योनुसखासयूथ्यः ॥ अग्नीषोमाभ्या
न्त्वाजुष्टम्प्रोक्षामि ॥ ९ ॥ अपाम्पेरुः ॥ अपाम्पेरुरस्यापोदेवीःस्वदन्तु

स्यात्ताश्चित्सहैवहुविः ॥ सन्तेप्राणोवातेनगच्छताᳫंसमङ्गानियज
त्रैःसंय्यज्ञपतिराशिषा॥ १०॥ घृतेनाक्तौ। पशूंस्त्रायेथाᳫंरेवतियज
मानेप्रियन्धाऽआविश ॥ उरोरन्तरिक्षात्सजूर्देवेनवातेनास्यहवि
षस्त्मनायजसमस्यतन्वाभव॥वर्षोवर्षीयसियज्ञेयज्ञपतिन्धाःस्वा
हादेवेभ्योदेवेभ्यःस्वाहा॥ ११ ॥[५] माहिः॥ माहिर्भूर्मापृदा
कुर्न्नमस्तऽआतानानर्वाप्रेहि॥ घृतस्यकुल्याऽउपऽऋतस्यपथ्याऽअ
नु॥ १२॥ देवीरापः॥ शुद्धावोᳫंसुपरिविष्टादेवेषुसुपरिविष्टावयम्प

रिवेष्टारो भूयास्म ॥१३॥ वाचन्ते ॥ वाचन्ते शुन्धामि प्राणन्ते शु
न्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्
न्ते शुन्धामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि ॥ १४ ॥ मनस्ते ॥
मनस्तऽआप्यायताम्वाक्तऽआप्यायताम्प्राणस्तऽआप्यायताञ्च
क्षुस्तऽआप्यायताᳬश्रोत्रन्तऽआप्यायताम् ॥ यत्ते क्रूरं यदास्थि
तन्तत्तऽआप्यायतान्निष्ट्यायतान्तत्ते शुद्ध्यतु शमहोभ्यः ॥ ओष
धेत्रायस्व स्वधिते मैनᳬहिᳬसीः ॥१५॥ रक्षसाम्भागः ॥ रक्षसाम्भागो

सिनिरस्तह्रक्षंऽइदमुह्रक्षोभितिष्ठामीदमह्रक्षोवबाधऽइदम
ह्रक्षोधमन्तमौनयामि ॥ घृतेनंद्यावापृथिवीप्प्रोर्णुवाथांवायोवे
स्तोकानामग्निराज्ज्यंस्यवेतुस्वाहास्वाहांकृतेऽऊर्द्ध्वनंभसम्मारुतङ्ग
च्छतम्॥१६॥ इदमापः॥ इदमापःप्प्रवंहतावद्यञ्चमलंञ्चयत्॥यच्चा
भिदुद्रोहानृतंय्यच्चंशेपेऽअंभीरुणम् ॥ आपोमातस्म्मादेनंसःपव
मानश्चमुञ्चतु॥१७॥[६]सन्ते॥सन्तेमनोमनसासम्प्राणःप्प्राणेन
गच्छताम्॥रेडस्यग्निष्ट्वाश्रीणात्वापस्त्वासमंरिणन्वातस्यत्वाद्ध्राज्ज्यै

पूष्णोरᳪंहाऽऊष्मणोव्यथिषत्स्युतन्द्वेषं ॥ १८ ॥ घृतङ्घृतपावा
नः ॥ घृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यह
विरसिस्वाहा ॥ दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः
स्वाहा ॥ १९ ॥ ऐन्द्रःप्राणः ॥ ऐन्द्रःप्राणोऽअङ्गेऽअङ्गेनिदीध्य
दैन्द्रऽउदानोऽअङ्गेऽअङ्गेनिधीतः ॥ देवस्यत्वष्टुर्भूरितेसᳪंसमेतुस
लक्ष्मायद्विषुरूपम्भवाति ॥ देवत्रायन्तमवसेसखायोनुत्वामाता
पितरोमदन्तु ॥ २० ॥ [३] समुद्रङ्गच्छ ॥ समुद्रङ्गच्छस्वाहान्तरिं

क्षङ्गच्छस्वाहादिवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहा
होरात्रेगच्छस्वाहाच्छन्दाꣳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वा
हायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निंवै
श्वानरङ्गच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमोगच्छतुस्वर्ज्यो
तिः पृथिवीम्भस्मनापृणस्वाहा॥२१॥मापः॥मापोमौषधीर्हिꣳसी
र्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च॥यदाहुरघ्न्याऽइतिवरुणेति
शपामहेततोवरुणनोमुञ्च॥सुमित्रियानऽआपऽओषधयःसन्तुदु

र्म्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥२२॥[२]
हविष्म्मतीरिमा ॥ हविष्म्मतीरिमाऽआपोहविष्म्माँ२ऽआविवा
सति ॥ हविष्म्मान्देवोऽअद्ध्वरोहविष्म्माँऽअस्तुसूर्य्यः ॥ २३ ॥
अग्नेर्व्वः ॥ अग्नेर्व्वोपन्नगृहस्यसदसिसादयामीन्द्राग्न्योर्भागधे
यीस्त्थमित्रावरुणयोर्भागधेयीस्त्थविश्वेषान्देवानाम्भागधेयी
स्त्थ ॥ अमूर्य्याऽउपसूर्य्येयाभिर्व्वासूर्य्यःसह ॥ तानोहिन्वन्त्वद्ध्व
रम ॥२४॥[२] हृदेत्त्वामनसेत्त्वादिवेत्त्वासूर्य्यायत्त्वा ॥ ऊर्द्ध्वमि

ममंच्छरान्दुविदुवेषुहोत्त्रायच्छ ॥ २५ ॥ सोमंराजन् ॥ सोमंराजन्वि
श्वास्त्वम्प्रजाऽउपावंरोहुविश्वास्त्वाम्प्रजाऽउपावंरोहन्तु ॥ शृणो
त्वग्निश्समिधाहवंम्मेशृुण्ण्वन्त्वापोधिषणाश्चदुवीः ॥ श्रोताग्ग्रावा
णोविदुषोनयुज्ञश्शृणोतुदुेवश्संविताहवंम्मेस्वाहा ॥ २६ ॥ देवीरा
पः ॥ देवीरापोऽअपान्नपाद्योवंऽऊर्म्मिर्हविष्ष्यऽइन्द्रियावान्मदि
न्तमः ॥ तन्दुेवेब्भ्योदेवत्राद्त्तशुक्रपेब्भ्योयेषांम्भागस्त्थस्वाहा
॥ २७ ॥ कार्षिरसि ॥ कार्षिरसिसमुद्रस्यत्त्वाक्षित्त्याऽउन्नंयामि ॥

समापौऽअद्भिरग्ग्मतसमोषधीभिरोषधीः॥२८॥ यमंग्ग्ने ॥ यमंग्ग्ने पृत्सुमर्त्त्युमवावाजैषुयञ्जुनाः ॥ सयन्ताशश्वतीरिषःस्वाहा ॥२९॥ [५] देवस्यंत्त्वा ॥ देवस्यंत्त्वासवितुःप्प्रंसवेश्विनौर्बाहुब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ आददेरावासिगभीरमिममध्वरङ्कुधीन्द्रायसुषूतमम् ॥ उत्तमेनपविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तंनिग्ग्राब्भ्यास्त्थदेवश्रुतस्तर्प्पयतमामनोमे ॥ ३० ॥ मनोमे । तर्प्पयतवाचम्मेतर्प्पयतप्प्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मेतर्प्पयतात्त्मानम्मेतर्प्प

यतप्प्रजाम्मैतर्प्पयतपशून्मैतर्प्पयतगणान्मैतर्प्पयतगणामेमाविर्तृपन् ॥३१॥ इन्द्रायत्त्वा ॥ इन्द्रायत्त्वावसुमतेरुद्रवंतऽइन्द्रायत्त्वादित्त्यवंतऽइन्द्रायत्त्वाभिमातिग्घ्ने ॥ श्येनायत्त्वासोमभृतेग्नयेत्त्वारायस्प्पोषदे ॥३२॥ यत्ते। सोमदिविज्ज्योतिर्य्यत्पृथिव्व्यांय्यदुरावन्तरिक्षे। तेनास्म्मैयजमानायोरुरायेकृध्याधिदात्रेवोचः ॥३३॥ श्वात्रास्त्थ ॥ श्वात्रास्त्थवृत्रतुरोराधोगूर्ताऽअमृतस्यपत्नीः ॥ तादेवीर्देवत्रेमंय्यज्ञन्नयतोपहूताःसोमस्यपिबत ॥३४॥ माभेः ॥ माभे

स्मासंविक्थाऽऊर्ज्जंन्धत्त्वाधिषणेवीड्वीसतीवीडयेथामूर्ज्जंन्दधाथा
म्॥पाप्माहतोनसोमः॥३५॥प्रागपाक्॥ प्रागपागुदगधराक्सर्वत
स्त्वादिशआधावन्तु॥ अम्बानिष्प्परसमरीविदाम् ॥३६॥ त्वमङ्ग॥
त्वमङ्गप्रशंᳪसिषोदेवऽशविष्ठमर्त्त्यम्॥नत्त्वदन्न्योमघवन्नस्तिमर्ड्डि
तेन्द्रब्रवीमितेवचः॥३७॥॥८॥ इतिश्रीवाजसनेयसंहितायांषष्ठोऽ
ध्यायः।६। श्रीवेदपुरुषायनमः॥अनुवाकसूत्रम्। वाचस्पतयउपया
मगृहीतोसित्रिकावावायोयंवाद्धिकोयस्तएकाप्राणायतिस्रोमघव

इंद्राग्नीआगतमाद्यौमासश्चर्षणीधृतोविश्वेदेवासऽआगतेंद्रंमरुत्वो
मरुत्वंतंवृषभंमरुत्वांतौजसेसजोषाइंद्रमरुत्वाँ२इंद्रमहाँ२ इंद्रोम
हाँ२इंद्रएकैकोदुत्यमष्टौपंचविꣳशतिरष्टाचत्वारिꣳशत्॥ हरिःॐ
व्वाचस्पतये ॥ व्वाचस्पतयेपवस्ववृष्ष्णोऽअꣳशुब्भ्याङ्गभस्तिपू
तः ॥ देवोदेवेब्भ्यः पवस्वयेषाम्भागोसि ॥१॥ मधुमतीर्न्नः ॥ मधु
मतीर्न्नऽइषस्कृधियत्तेसोमादाभ्यन्नामजागृवितस्म्मैतेसोमसोमा
यस्वाहास्वाहोर्व्वन्तरिक्षमन्न्वेमिस्वाङ्कृतोसि ॥२॥ स्वाङ्कृतोसि। व्विश्वे

भ्यऽइंद्रियेभ्यो॑दि॒व्येभ्य॑ऽपार्थिवेभ्यो॒मनंस्त्वाष्टु॒स्वाहा॑त्त्वासुभ वसू॒व्या॑यदे॒वेभ्य॑स्त्वामरीचि॒पेभ्यो॒देवां॑ऽशो॒यस्म्मै॑त्वेडे॒तत्स॒त्य मु॒परि॒प्लुता॑भ॒ङ्गेनं॑ह॒तो॒ऽसौ॒फट्प्रा॒णाय॑त्त्वाव्या॒नाय॑त्त्वा ॥३॥ [३] उ॒प॒या॒मगृ॑हीतो॒ऽसि ॥ उ॒प॒या॒मगृ॑हीतो॒स्य॒न्तर्य॑च्छमघव॒न्पा॒हि॒सोम॑म् ॥ उ॒रु॒ष्य॒राय॒ऽए॒षो॑यजस्व ॥४॥ अ॒न्तस्ते॑ ॥ अ॒न्तस्ते॒द्यावा॑पृथि॒वीद॑धा म्म्य॒न्तर्द॑धाम्म्यु॒र्व॑न्तरि॑क्षम् ॥ स॒जूर्दे॒वेभि॒रव॑रैः॒परै॑श्चा॒न्तर्या॒मेम॑घ वन्मा॒दय॑स्व ॥५॥ स्वाङ्कृ॑तो॒ऽसि ॥ स्वाङ्कृ॑तो॒ऽसि॒वि॒श्वेभ्य॑ऽइन्द्रि॒येभ्यो॑

द्दिव्येभ्यऽपार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेभ्य
स्त्वामरीचिपेभ्यंऽउदानायत्त्वा ॥ ६ ॥ [ ३ ] आवांयो ॥ आवांयो
भूपशुचिपाऽउपनःसहस्रन्तेनियुतोविश्ववार ॥ उपोतेऽअन्धोमद्य
मयामियस्यदेवदधिषेपूर्वपेयंवायवेत्त्वा॥७॥इन्द्रवायूऽइमे । सुताऽ
उपप्रयोभिरागतम्॥ इन्दवोवामुशन्तिहि॥ उपयामगृहीतोसिवाय
वऽइन्द्रवायुभ्यान्त्वैषतेयोनिः सजोषोभ्यान्त्वा ॥८॥ [२] अयं
वांम् ॥ अयंवांम्मित्रावरुणासुतःसोमऽऋतावृधा ॥ ममेदिहश्रुतः

हवम् ॥ उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा ॥ ९ ॥ रायावय
म् ॥ रायावयꣳसंसवाꣳसोमदेमहव्येनदेवायवसेनगावः ॥ तान्धेनु
म्मित्रावरुणायुवन्नोविश्वाहाधत्तमनपस्फुरन्तीमेषतेयोनिर्ऋता
युभ्यान्त्वा ॥ १० ॥ [२] यावाम् ॥ यावाङ्कशामधुमत्यश्विनासूनृता
वती ॥ तयायज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैषते
योनिर्म्माद्ध्वीभ्यान्त्वा ॥ ११ ॥ [१] तम्प्रत्नथा । पूर्वथाविश्वथे
मथाज्ज्येष्ठतातिम्बर्हिषदꣳस्वर्विदम् ॥ प्रतीचीनंवृजनन्दोहसेधुनिं

माशुञ्जयंन्तमनुयासुवर्द्धसे ॥ उपयामगृंहीतोसिशण्डांयत्त्वैषतेयो
निर्व्वीरतांम्पाह्यपंमृष्टःशण्डोदेवास्त्वांशुक्रपाःप्प्रणंयन्त्वनांधृष्टा
सि॥१२॥सुवीरोंव्वीरान्॥सुवीरोव्वीरान्प्रंजनयन्त्परींह्यभिरायस्प्पो
षेणयजंमानम् ॥ सञ्जग्मानोदिवापृंथिव्याशुक्रःशुक्रशोचिषानिरं
स्तःशण्ड÷शुक्रस्याधिष्ठानंमसि ॥ १३ ॥ अच्छिन्नस्यते । देवसोम
सुवीर्य्यस्यरायस्प्पोषंस्यदर्दितारं÷स्याम ॥ साप्प्रंथमासंस्कृतिर्व्विश्व
वारासप्प्रंथमोव्वरुंणोमित्रोऽअग्निः ॥१४॥ सप्प्रंथमः ॥ सप्प्रंथमोबृ

हृस्पतिश्चिकित्वाँस्तस्माऽइन्द्रायसुतमाजुंहोतस्वाहा ॥तृम्पन्तुहो
त्रामध्वोयाःस्विष्टायाःसुप्रीताःसुहुतायत्स्वाहायाडग्नीत् ॥ १५॥
[४] अयंवेनऽ ॥ अयंवेनश्चोदयत्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसो
विमाने ॥ इममपाᳬंसङ्गमेसूर्य्यस्यशिशुन्नविप्रामतिभीरिहन्ति ॥
उपयामगृहीतोसिमर्कायत्त्वा ॥ १६॥ मनोन । येषुहवनेषुतिग्मं
विपऽशच्यावनुथोद्रवन्ता ॥ आयःशर्य्याभिस्तुविनृम्णोऽअस्या
श्श्रीणीतादिशङ्गभस्तावेषतेयोनिः प्रजाःपाह्यपमृष्टोमर्कोदेवा

स्त्वामन्थिपाऽप्प्रणयन्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाऽप्प्रजाऽप्प्र
जनयन्परीह्यभिरायस्प्पोषेणयजमानम् ॥ सञ्जग्म्मानोदिवापृथि
व्यामन्थीमन्थिशोचिषानिरस्तोमर्कोमन्थिनोधिष्ठानमसि॥१८॥
[३] येदेवासऽ ॥ येदेवासोदिव्व्येकादशस्त्थपृथिव्व्यामध्ध्येकादश
स्त्थ ॥ अप्प्सुक्षितोमहिनैकादशस्त्थतेदेवासोयज्ञमिमञ्जुषद्ध्व
म् ॥ १९ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याग्ग्रयणोसिस्वा
ग्ग्रयणऽ ॥ पाहियज्ञम्पाहियज्ञपतिंविष्ण्णुस्त्वामिन्द्रियेणपातु

विष्णुन्त्वम्पाह्यभिसवनानिपाहि ॥२०॥ सोमः पवते ॥ सोमः प
वतेस्मैब्रह्मणेस्मैक्षत्रायास्मैसुन्वतेयजमानायप
वतऽइषऽऊर्जेपवतेद्भ्यऽओषधीभ्यः पवतेद्यावापृथिवीभ्याम्पवते
सुभूतायपवतेविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवे
भ्यः ॥ २१ ॥ [३] उपयामगृहीतोसि । उपयामगृहीतोसीन्द्राय
त्वाबृहद्वतेवयस्वतऽउक्थाव्यङ्गृह्णामि ॥ यत्तऽइन्द्रबृहद्वयस्तस्मै
त्वाविष्णवेत्वैषतेयोनिरुक्थेभ्यस्त्वादेवेभ्यस्त्वादेवाव्यंयज्ञ

स्यायुंपेगृह्णामिमित्त्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्त्रावरुणाभ्या
न्त्वा । देवाब्भ्यंय्यज्ञस्यायुंषेगृह्णामीन्द्रायत्त्वादेवाब्भ्यंय्यज्ञस्यायुंषे
गृह्णामीन्द्राग्निभ्यान्त्वादेवाब्भ्यंय्यज्ञस्यायुंषेगृह्णामीन्द्रावरुणा
भ्यान्त्वादेवाब्भ्यंय्यज्ञस्यायुंषेगृह्णामीन्द्राबृहस्प्पतिभ्यान्त्वादे
वाब्भ्यंय्यज्ञस्यायुंषेगृह्णामीन्द्राविष्ष्णुभ्यान्त्वादेवाब्भ्यंय्यज्ञस्यायुं
षेगृह्णामि ॥ २३ ॥ [२] मूर्द्धानंन्दिवऽ ॥ मूर्द्धानंन्दिवोऽअरतिम्पृथि
व्यावैश्वानरमृतऽआजातमग्निम् ॥ कविꣳसम्म्राजमतिथिञ्जनानां

वीरैᳫँसुपोषᳫँपोषैᳫँ॥ २९ ॥ [३] उपयामगृंहीतोसि ॥ उपयामगृंही
तोसिमधवेत्त्वोपयामगृंहीतोसिमाधवायत्त्वोपयामगृंहीतोसिशु
क्रायत्वोपयामगृंहीतोसिशुचंयेत्वोपयामगृंहीतोसिनभंसेत्वोपया
मगृंहीतोसिनभस्यायंत्वोपयामगृंहीतोसीपेत्वोपयामगृंहीतोस्यू
र्जेत्वोपयामगृंहीतोसिसहंसेत्वोपयामगृंहीतोसिसहस्यायंत्वोपया
मगृंहीतोसितपंसेत्वोपयामगृंहीतोसितपस्यायंत्वोपयामगृंहीतो
स्यᳫँहसस्पतयेत्त्वा ॥ ३० ॥ [१] इन्द्राग्नीऽआगंतम् ॥ इन्द्रा

ग्नाँ२ऽआगतꣳसुतङ्गीर्भिर्न्नभो वरेण्यम् ॥ अस्यपातन्धियेषिता ॥
उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्निभ्यान्त्वा
॥ ३१ ॥ [ १ ॥ आघं ॥ आघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुष
क् ॥ येषामिन्द्रोयुवासखा ॥ उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैष
तेयोनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥ [ १ ] ओमासश्चर्षणीधृतः ॥ ओ
मासश्चर्षणीधृतोविश्वेदेवासऽआगत ॥ दाश्वाꣳसोदाशुषꣳसुतम् ॥
उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्य

स्त्वादेवेभ्यः ॥ ३३ ॥ [ १ ] विश्वेदेवासः ॥ विश्वेदेवासऽआगंतश्रृ
णुतामऽइमꣳहवंम् ॥ एदम्बर्हिर्निषीदत ॥ उपयामगृहीतोसिविश्वे
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ३४ ॥ [ १ ]
इन्द्रंमरुत्त्वः ॥ इन्द्रमरुत्त्वऽइहपाहिसोमंयथाशार्य्यातेऽअपिबः
सुतस्य ॥ तवप्प्रणीतीतवशूरशर्म्मन्नाविवासन्तिकवयःसुयज्ञाः ॥
उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वंतऽएषतेयोनिरिन्द्रायत्त्वामरु
त्त्वते ॥ ३५ ॥ [ १ ] मरुत्त्वन्तंवृषभंवावृधानमकवारिन्दिव्यꣳशा

सामेन्द्रंम् ॥ विश्वासाहमवसेनूतनायोग्ग्रꣳसहोदामिहतꣳहुवेम ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते ॥ [ १ ] उपयामगृहीतोसिमरुतान्त्वौजसे ॥ ३६ ॥ [१] सजोषाऽइन्द्र ॥ सजोषाऽइन्द्रसगणोमरुद्भिꣳसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनꣳ ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते ॥ ३७ ॥ [१] मरुत्वाँ२ऽइन्द्र । वृषभोरणायापिबासोमंमनुष्वधं

म्मदाय ॥ आसिञ्चस्वजठरेमद्धंऽऊर्मिमन्त्वङ्‌राजासिप्रतिपत्सुता
नाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वामुरुत्त्वंतऽएषतेयोनिरिन्द्राय
त्त्वामुरुत्त्वंते ॥ ३८ ॥ [१] महाँ२इन्द्रं÷ ॥ महाँ२ऽइन्द्रोनृवदाचं
र्षणिप्राऽउतद्विबर्हाऽअमिनःसहोभिः ॥ अस्म्मद्र्यग्ग्वावृधेवी
र्य्यायोरुःपृथुःसुकृतःकर्तृभिर्भ्भूत् ॥ उपयामगृहीतोसिमहेन्द्राय
त्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥ ३९ ॥ [१] महाँ२ऽइन्द्रं÷ ॥ महाँ२इ
न्द्रोयऽओजसापर्ज्जन्न्योवृष्टिमाँ२ऽइव ॥ स्तोमैर्व्वत्सस्यवावृधे ॥ उप

यामगृहीतोसिमहेन्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ ४० ॥ [ १ ]
उदुत्यम् ॥ उदुत्यञ्जातवेदसन्देवंवंहन्तिकेतवं ÷ ॥ दृशेविश्वायसू
र्य्यᳪस्वाहा ॥ ४१ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगादनीक
ञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेऽ ॥ आप्प्राद्यावापृथिवीऽअन्तरिक्षᳪसू
र्य्यऽआत्मजगतस्तस्थुषश्चस्वाहा ॥ ४२ ॥ अग्नेनय । सुपथाराये
ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराण
मेनोभूयिष्ठान्तेनमऽउक्तिंविधेमस्वाहा ॥ ४३ ॥ अयन्नं÷ ॥ अयन्नो

ऽअग्निर्व्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्प्रभिन्दन् ॥ अयंव्वाजाञ्ज
यतुव्वाजंसातावयꣳ शत्रूञ्जयतुजर्हृषाणꣳस्वाहा ॥ ४४ ॥ रूपेणवꣳ ॥
रूपेणवोरूपमꣳभ्यागान्तुथोवोव्विश्ववेदाव्विभजतु ॥ ऋतस्यपथाप्प्रे
तचन्द्रदक्षिणाव्विस्वꣳपश्यꣳव्यन्तरिक्षंय्यतस्वसदस्यैः ॥ ४५ ॥ ब्राह्म
णमद्य । व्विदेयम्पितृमन्तम्पैतृमत्यम्मृषिमार्षेयꣳसुधातुदक्षिणम् ॥
अस्मद्द्राता देवत्राग्गच्छतप्प्रदातारमाविशत ॥ ४६ ॥ अग्नयेत्त्वा ॥
अग्नयेत्त्वामह्यंव्वरुणोददातुसोमृतत्त्वमशीयायुर्द्दात्रऽएधिमयो

मह्यम्प्रतिग्ग्रहीत्रेरुद्रायत्त्वामह्यंव्वरुणोददातुसोमृतत्त्वमशीय
प्प्राणोदात्रऽएधिवयोमह्यम्प्रतिग्ग्रहीत्रेबृहस्प्पतयेत्त्वामह्यंवरुणो
ददातुसोमृतत्त्वमशीयत्त्वग्ग्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेयमा
यत्त्वामह्यंव्वरुणोददातुसोमृतत्त्वमशीयहयोदात्रऽएधिवयोमह्य
म्प्रतिग्ग्रहीत्रे॥४७॥ कोदात्॥ कोदात्कस्म्माऽअदात्कामोदात्का
मायादात्॥ कामोदाताकामः प्रतिग्ग्रहीताकामैतत्ते॥४८॥[८]
॥२५॥ इतिश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः॥७॥ श्रीवेदपुरु

पायनमः ॥ अनुवाकसूत्रम् ॥ उपयामगृहीतोस्यादित्येभ्यः पंचवाम
मद्यद्धेसुशर्मास्येकाबृहस्पतिसुतस्यद्वेहरिरसिचतस्रःसमिन्द्रेणाष्टौ
माहिरेजतुदशमास्यःपंचकावातिष्ठयुक्ष्वाहींद्रामिदेकैकायस्मान्नद्वे
ग्नेपवस्वोत्तिष्ठन्नऽइत्थमुदुत्यमेकैकाजिघ्रद्वेविनइंद्रवाचस्पतिंविश्व
कर्मन्नेकैकाग्नयेत्वाचतस्रइहरतिस्तिस्रःपरमेष्ठीदशत्रयोविᳮशति
स्त्रिषष्टिः ॥ हरिःॐ उपयामगृहीतोसि ॥ उपयामगृहीतोस्यादित्ये
भ्यस्त्वा ॥ विष्णऽउरुगायैषतेसोमस्तᳮरक्षस्वमात्वादभन् ॥ १ ॥

कुदाचुन । स्तुरीरंसिुनेन्द्रंसश्चासिदुाशुषे ॥ उपोुपेन्नुमंघवुन्भूयुऽइन्नु
तेुदानंन्दुेवस्यंपृच्यतऽआदुित्येभ्यंस्त्वा ॥ २॥ कुदाचुन । प्प्रयुंच्छ
स्युभेनिपांसिुजन्मंनी ॥ तुरीया॑दित्युसनंवन्तऽइन्द्रुयमातंस्त्था
वुमृतंन्दुिव्याादुित्येभ्यंस्त्वा ॥ ३ ॥ युज्ञोदुेवानांम् ॥ युज्ञोदुेवाना
म्प्प्रत्येतिसुुम्नमा॑दित्यासुोभवंतामृडुयन्तंः ॥ आवोुर्वाचीसुमुति
र्वृत्त्यादुंहोश्चिद्यावंरिवोवित्तुरासंदादुित्येभ्यंस्त्वा ॥ ४॥ विवंस्व
न्नादित्य ॥ विवंस्वन्नादित्त्यैषतेसोमपीुथस्तस्मिन्मत्स्व ॥ श्रदंस्म्मै

नरोवर्चसेदधातनयदाशीर्दादम्पतीवाममश्नुतः ॥ पुमान्पुत्रोजा
यतेविन्दतेवस्वधाविश्वाहारपऽएंधतेगृहे ॥५॥ [५] वाममद्य। संवि
तर्वाममुश्वोदिवेदिवेवाममुस्मभ्यंसावीः ॥ वामस्यहिक्षयंस्यदे
वभूरेरयाधियावामभाजःस्याम॥६॥ उपयामगृहीतोसि। सावित्रो
सिचनोधाश्चनोधाऽअसिचनोमयिधेहि ॥ जिन्वयज्ञञ्जिन्वयज्ञप
तिम्भगायदेवायत्वासवित्रे ॥ ७॥ [ २ ] शतम् ॥ ३०० ॥ उपयाम
गृहीतोसि । सुशर्म्मासिसुप्प्रतिष्ठानोबृहदुक्षायनमः ॥ विश्वेभ्य

स्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यः॥ ८॥[ १ ] उप
यामगृहीतोसि॥ उपयामगृहीतोसिबृहस्प्पतिसुतस्यदेवसोमतऽइ
न्दोरिन्द्रियावतःपत्नीवतोग्ग्रहाँ२ऽऋध्यासम्॥ अहम्पुरस्तादहम
वस्ताद्यदन्तरिक्षन्तदुमेपिताभूत्॥ अहꣳसूर्य्यमुभयतोददर्शाह
न्देवानाम्परमङ्गुहायत्॥९॥ अग्ग्नाँ ३ ऽइपत्नीवन्॥ अग्ग्नाँ ३ ऽइ
पत्नीवन्त्सजूर्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा॥ प्रजापतिर्वृषासिरेतो
धारेतोमयिधेहिप्प्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय॥१०॥[२]

उपयामगृहीतोसि ॥ उपयामगृहीतोसिहरिरसिहारियोजनोहरि
भ्यान्त्वा ॥ हर्य्योर्द्धानास्त्थसहसोमाऽइन्द्राय ॥ ११ ॥ यस्ते।
ऽअश्वसनिर्भक्षोयोगोसनिस्तस्यतऽइष्टयजुषऽस्तुतस्तोमस्यशस्तो
क्थस्योपहूतस्योपहूतोभक्षयामि॥१२॥देवकृतस्यैनसऽ॥ देवकृतस्यै
नसोवयजनमसिमनुष्ष्यकृतस्यैनसोवयजनमसिपितृकृतस्यैनसो
वयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोवयजनमसि ॥
यच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्यसर्व्वस्यैनसोवयजनमसि

॥१३॥ संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳशि
वेन॥त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥१४॥[४]
समिन्द्र । णोमनसानेषिगोभिःसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या ॥
सम्ब्रह्मणादेवकृतंय्यदस्तिसन्देवानाꣳसुमतौयज्ञियानाꣳस्वाहा
॥ १५ ॥ संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳ
शिवेन । त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम् ॥ १६ ॥
धातारातिः । सवितेदञ्जुषन्ताम्प्रजापतिर्न्निधिपादेवोऽअग्निः ॥ त्व

ष्ठाविष्णुं॑÷प्प्रजयांसꣳरराणायजंमानायद्रविंणन्दधातुस्वाहा॑ ॥ १७ ॥ सुगावं÷ ॥ सुगावोंदेवाꣳसदंनाऽअकर्म्मुयऽआंजुग्मेदꣳसवनञ्जुषाणाꣳ ॥ भरंमाणाव्वहंमानाहुवीꣳष्ष्युस्म्मेधंत्तवसवोव्वसूंनिस्वाहा॑ ॥ १८ ॥ याँ२ऽआवंहꣳ ॥ याँ२आवंहऽउशुतोदेंवदेवाँस्तान्प्रेरंयस्वेऽअंग्नेसुधस्त्थे ॥ जुक्षिवाꣳसं÷पपिवाꣳसंश्वविश्वेसुंङ्घर्म्मꣳस्वरातिष्ठुतानुस्वाहा॑ ॥ १९ ॥ वयꣳहि । त्त्वांप्प्रयुतियुज्ञेऽअुस्म्मिन्नग्नेहोतांरमवृंणीमहीह ॥ ऋधंगयाऽऋधंगुताशंमिष्ठाꣳप्प्रजानन्न्य

ज्ञमुपयाहिविद्वान्त्स्वाहा ॥ २० ॥ देवांगातुविदः ॥ देवांगातुविदो
गातुंवित्त्वागातुमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः
॥ २१ ॥ यज्ञंयज्ञम ॥ यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयोनिङ्गच्छ
स्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्ववीरस्तञ्जुषस्वस्वाहा
॥ २२ ॥ [८] माहिः ॥ माहिर्भूर्म्मापृदाकुः । उरुꣳहिराजावरुणश्च
कारसूर्य्यायपन्थामन्वेतवाऽउ ॥ अपदेपादाप्रतिधातवेकरुतापव
क्ताहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाशः ।२३।

अग्नेरनीकम् ॥ अग्नेरनीकमपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् ॥ दमेदमेसमिधंयक्ष्यग्नेप्रतितेजिह्वाघृतमुच्चरण्यत्स्वाहा ॥ २४ ॥ समुद्रेते ॥ समुद्रेतेहृदयमप्स्वन्तश्सन्त्वाविशन्त्वोषधीरुताप॑ ॥ यज्ञस्यत्वायज्ञपतेसूक्तोक्तौनमोवाकेविधेमयत्स्वाहा ॥ २५ ॥ देवीरापऽ ॥ देवीरापऽएषवोगर्भस्तꣳसुप्रीतꣳसुभृतम्बिभृत ॥ देवसोमैषतेलोकस्तस्मिञ्छञ्चवक्ष्वपरिचवक्ष्व ॥ २६ ॥ अवभृथनिचम्पुण । निचेरुरसिनिचम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्य

कृतम्पुरुराव्णोदेववरिषस्प्याहिदेवानाꣳसमिदसि ॥ २७ ॥ [५] एजं
तुदशमास्यः ॥ एजंतुदशमास्योगर्भोजरायुणासह ॥ यथायंव्वायुरे
जतियथासमुद्रऽएजति ॥ एवायन्दशमास्योऽअस्त्रंजरायुणासह
॥ २८ ॥ यस्यैते । यज्ञियोगर्भोयस्यैयोनिर्हिरण्ययी ॥ अङ्गान्यह्रु
तायस्यतम्मात्रासमजीगमꣳस्वाहा ॥ २९ ॥ पुरुदस्मोविषुरूपऽ ॥
पुरुदस्मोविषुरूपऽइन्दुरन्तर्म्महिमानमानञ्जधीरः ॥ एकपदी
न्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानुप्प्रथन्ताꣳस्वाहा

॥ ३० ॥ मरुतोयस्य ॥ मरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससु
गोपातमोजनः ॥ ३१ ॥ महीद्यौः । पृथिवीचनऽइमंयज्ञम्मिमि
क्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३२ ॥ [५] आतिष्ठ । वृत्रहन्रथंयु
क्तातेब्रह्मणाहरी ॥ अर्वाचीनꣳसुतेमनोग्ग्रावाकृणोतुवग्नुना ॥ उप
यामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वाषोड
शिने ॥ ३३ ॥ [१] युक्क्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा ॥ अथानऽ
इन्द्रसोमपागिरामुपश्रुतिञ्चर ॥ उपयामगृहीतोसीन्द्रायत्त्वाषोड

शिनेऽएषतेयोनिरिन्द्रायत्त्वाषोडशिने ॥३४॥ [१] इन्द्रमित् ॥ इ
न्द्रमिद्धरीवहतोप्प्रतिधृष्टशवसम् ॥ ऋषीणाञ्चस्तुतीरुपयज्ञञ्चमानु
षाणाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनेऽएषतेयोनिरिन्द्रा
यत्त्वाषोडशिने ॥३५॥ [१] यस्मान्न । जातः परोऽअन्न्योऽअस्तियऽ
आविवेशभुवनानिविश्वा ॥ प्रजापतिः प्प्रजयासᳪरराणस्त्रीणिज्ज्यो
तीᳪषिसचतेसषोडशी ॥३६॥ इन्द्रश्च । सम्म्राड्वरुणश्चराजातौतेभक्ष
ञ्चक्रतुरग्ग्रऽएतम् ॥ तयोरहमनुभक्षम्भक्षयामिवाग्ग्देवीजुषाणा

न्त्विन्द्वंदं ॥ पुनरूर्जानिवर्तस्वसानं÷सहस्त्रेन्धुक्क्ष्वोरुधारापर्यस्व
तीपुनम्मांविशताद्रयिः ॥४२॥इडेरन्तें ॥ इडेरन्तेहव्व्येकाम्म्येचन्द्रे
ज्ज्योतेदितिसरंस्वतिमहिविश्श्रुंति ॥ एतातेऽअग्घ्न्येनामांनिदेवे
ब्भ्योमासुकृतम्ब्रूतात्॥४३॥[२]व्विनं।ऽइन्द्रमृधोंजहिनीचायंच्छ
पृतन्न्यतः॥योऽअस्म्माँ२ऽअंभिदासत्त्यधंरङ्गमयातमं÷॥उपयाम
गृहीतोसीन्द्रांयत्त्वाव्विमृधंऽएषतेयोनिरिन्द्रांयत्त्वाव्विमृधें ॥४४॥
[१]व्वाचस्प्पतिं।व्विश्श्वकंम्मांणमूतयेंमनोजुवंवाजेंऽअद्याहुवेम ॥

सनोविश्वानिहवनानिजोषद्विश्वशंम्भूरवसेसाधुकर्म्मा ॥ उपयाम
गृहीतोसीन्द्रायत्त्वाविश्वकर्म्मणऽएषतेयोनिरिन्द्रायत्त्वाविश्वक
र्म्मणे ॥ ४५ ॥ [ १ ] विश्वंकर्म्मन्हविषा ॥ विश्वंकर्म्मन्हविषावर्द्ध
नेनत्त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्म्मैविशः समनमन्तपूर्वीरयमु
ग्ग्रोविहव्योयथासत् ॥ उपयामगृहीतोसीन्द्रायत्त्वाविश्वकर्म्मणऽ
एषतेयोनिरिन्द्रायत्त्वाविश्वकर्म्मणे ॥ ४६ ॥ [ १ ] उपयामगृहीतो
सि ॥ उपयामगृहीतोस्यग्नयेत्त्वागायत्रच्छन्दसंगृह्णामीन्द्रायत्त्वा

त्रिष्टुप्छन्दसंगृह्णामिविश्वेभ्यस्त्वादेवेभ्योजगच्छन्दसंगृह्णा
म्यनुष्टुप्तेभिगरः ॥ ४७ ॥ व्रेशीनान्त्वा ॥ व्रेशीनान्त्वापत्मन्नाधू
नोमिकुकूननानान्त्वापत्मन्नाधूनोमिभन्दनानान्त्वापत्मन्ना
धूनोमिमदिन्तमानान्त्वापत्मन्नधूनोमिमधुन्तमानान्त्वाप
त्मन्नाधूनोमिशुक्रन्त्वाशुक्रआधूनोम्म्यह्नोरूपेसूर्य्यस्यरश्मिषु
॥ ४८ ॥ ककुभꣳरूपं ॥ वृषभस्यरोचतेबृहच्छुक्रःशुक्रस्यपुरोगाः
सोमःसोमस्यपुरोगाः ॥ यत्तेसोमादाभ्यन्नामजागृवितस्मैत्त्वा

गृह्णामितस्म्मैंतेसोमुसोमांयुस्वाहां ॥ ४९ ॥ उुशिक्त्वम् ॥ उुशिक्त्व
न्देंवसोमुाग्नेश्प्प्रियम्पाथोपींहिव्वुशीत्वन्दैंवसोुमेन्द्रंस्यप्प्रियम्पा
थोपींह्युस्म्मत्संखुात्वन्दैंवसोमुव्विश्श्वेषान्दुेवानांप्प्रियम्पाथोपींहि
॥ ५० ॥ [ ४ ] इुहरतिं÷ ॥ इुहरतिंरिहरंमद्ध्वमिुहधृतिंरिुहस्वधृंतिुं
स्वाहां ॥ उुपसृजन्धुरुणंम्मात्रेधुरुणोंमातुरन्धयंन् ॥ रायस्प्पोषंम
स्म्मासुंदीधरत्स्वाहां ॥ ५१ ॥ सुत्रस्युऽऋद्धिं÷ ॥ सुत्रस्युऽऋद्धिंरस्य
गंन्मुज्ज्योतिंरमृतांऽअभूम ॥ दिवंम्पृथिुव्याऽअद्ध्यारुंहामाविंदाम

देवान्त्स्वुर्ज्ज्योतिः ॥ ५२ ॥ युवन्तम् ॥ युवन्तामिन्द्रापर्व्वतापुरोयु
धायोनः पृतन्यादपृतन्तामिद्धंतंवज्ज्रेणतन्तामिद्धंतम् ॥ दूरेचुत्ताय
च्छन्त्सद्गहनंय्यदिनक्षत् ॥ अस्म्माकुᳪशत्त्रून्परिशूरविुश्वतोदुर्म्मा
दर्षीष्टविुश्वतः ॥ भूर्भुवुᳪस्वः सुप्प्रजाः प्प्रजाभिः स्यामसुवीरावी
रैः सुपोषाᳪपोषैः ॥ ५३ ॥ [ ३ ] परमेष्ठ्युभिधीतᳪप्प्रजापतिर्व्वाचि
व्याहृतायामन्धोऽअच्छेतᳪसवितासुन्यांविुश्वकर्म्मादीक्षायांम्पू
षासोमक्क्रयण्यामिन्द्रश्च ॥ ५४ ॥ इन्द्रश्च । मुरुतश्चक्कुयायोपोत्थि

तोसुरः पुण्यमानोमित्रः क्रीतोविष्णुः शिपिविष्टऽऊरावासन्नोवि
ष्णुर्न्नरन्धिषः प्रोह्यमाणः सोमः ॥ ५५ ॥ प्रोह्यमाणः सोमऽआग
तोवरुणऽआसन्द्यामासन्नोग्निराग्नीध्रऽइन्द्रोहविर्द्धानेथर्वोपावह्रि
यमाणोविश्वेदेवाः ॥ ५६ ॥ विश्वेदेवाः ॥ विश्वेदेवाऽअंशुषुन्यु
प्तोविष्णुराप्रीतपाऽआप्याय्यमानोयमः सूयमानोविष्णुः स
म्भ्रियमाणोवायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्म्मन्थीसक्तु
श्रीर्विश्वेदेवाः ॥ ५७॥ विश्वेदेवाः ॥ विश्वेदेवाश्चमसेषून्नीतोसुर्हो

मायोद्यतोरुद्रोहूयमानोवातोऽभ्यावृत्तोनृचक्षाःप्प्रतिख्यातोभ
क्षोभक्ष्यमाणःपितरोनाराशꣳसाःसन्नꣳसिन्धुः ॥ ५८ ॥ सन्नꣳसि
न्धुरवभृथायोद्यतःसमुद्रोऽभ्यवह्रियमाणःसलिलꣳप्प्रप्लुतोययोरो
जसास्कभितारजाꣳसिवीर्येभिर्वीरतमाशविष्ठा ॥ यापत्येतेऽअ
प्प्रतीतासहोभिर्विष्णूऽअगन्वरुणापूर्वहूतौ ॥ ५९ ॥ देवान्दिवम् ॥
देवान्दिवमगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्ष्यानन्तरिक्षमगन्यज्ञ
स्ततोमाद्रविणमष्टुपितृन्पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टुयङ्क

श्वंलोकमगंन्यज्ञस्ततोंमेभद्रमंभूत् ॥ ६० ॥ चतुंस्त्रिꣳशत्तन्तंवोये
विंतत्निरेयऽइमंꣳयज्ञꣳस्वधयाददंन्ते ॥ तेषांञ्छिन्नꣳसम्म्वेतद्दं
धामिस्वाहांघर्म्मोंऽअप्प्यैतुदेवान् ॥ ६१ ॥ यज्ञस्यदोहं÷ ॥ यज्ञस्य
दोहोंविंततंऽपुरुत्रासोऽअंष्टुधादिवंमन्वातंतान ॥ सयंज्ञधुक्ष्वम
हिंमेप्प्रजायांꣳरायस्प्पोषंविश्श्वमायुंरशीयस्वाहां ॥ ६२ ॥ आपंव
स्व ॥ आपंवस्वहिरंण्यवदश्श्वांवत्सोमवीरवंत् ॥ वाजङ्गोमंन्तमाभंर
स्वाहां ॥ ६३ ॥ [१०] ॥ २३ ॥ इतिश्रीवाजसनेयसंहितायांअष्टमो

ऽध्यायः ॥ ८ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ देवसवित
श्चतस्रइंद्रस्यवज्रःपंचदेवस्याहंदशापयेतिस्रोवाजस्येममष्टावग्निरे
काक्षरेणैषतेचतुष्कौसविताद्वेअष्टौचत्वारिꣳशत् ॥ हरिःॐ देवस
वितꣳ ॥ देवसवितꣳप्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योग
न्धर्वꣳकेतपूꣳकेतन्नꣳपुनातुवाचस्पतिर्वाजन्नꣳस्वदतुस्वाहा ॥ १ ॥
ध्रुवसदन्त्वा । नृषदम्मनꣳसदमुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृ
हाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम्॥अप्सुषदन्त्वाघृतसदंव्यो

मुसदंमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृण्हाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ पृथिवीसदन्त्वान्तरिक्षसदंन्दिविसदन्देवसदन्नाक
सदंमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृण्हाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ २ ॥ अपाᳪंरसम् ॥ अपाᳪंरसमुद्वयसᳪंसूर्य्येसन्तᳪंसमाहितम् ॥ अपाᳪंरसस्ययोरसस्तंवोगृण्हाम्म्युत्तममुपयाम
गृहीतोसीन्द्रायत्त्वाजुष्टंगृण्हाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम्
॥३॥ग्रहाऽऊर्ज्जाहुतयः॥ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्प्रायमतिम्॥

तेषांविशिंप्प्रियाणांवोहमिषमूर्ज्जᳪसमग्ग्रभमुपयामगृहीतोसी
न्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ सम्पृचौ
स्त्थᳪसम्माभद्रेणपृङ्क्तंविपृचौस्त्थोविमापाप्मनापृङ्क्तम् ॥ ४ ॥ [ ४ ]
इन्द्रस्यवज्ज्रं÷ ॥ इन्द्रस्यवज्ज्रोसिवाजसास्त्वयायंवाजᳪसेत् ॥
वाजस्यनुप्प्रसवेमातरम्महीमदितिन्नामवचसाकरामहे ॥ यस्या
मिदंविश्श्वम्भुवनमाविवेशतस्यान्नोदेवःसविताधर्म्मसाविषत् ॥ ५ ॥
अप्प्स्वन्तम् ॥ अप्प्स्वन्तरमृतमप्प्सुभेषजमपामुतप्प्रशस्तिष्वश्श्वा

भवंतव्वाजिनं÷ ॥ देवीरापोयोवंऽऊर्म्मिꣳप्प्रतूर्तिꣳककुन्मांन्वाज
सास्तेनायंव्वाजꣳसेत् ॥ ६ ॥ व्वातोवा ॥ वातोवामनोवागन्धर्व्वाःस
प्तविꣳशतिꣳ ॥ तेऽअग्ग्रेश्वमयुञ्जँस्तेऽअस्म्मिञ्जवमादधुꣳ ॥ ७ ॥
वातरꣳहाभवव्वाजिन्युज्यमानऽइन्द्रस्येवदक्षिणꣳश्श्रियैधि ॥ युञ्ज
न्तुत्त्वामरुतोविश्ववेदसऽआतेत्त्वष्टापत्सुजवन्दधातु ॥ ८ ॥ जवो
यः ॥ जवोयस्तेव्वाजिन्निहितोगुहायःश्श्येनेपरीतोऽअचरच्चवाते ॥
तेननोवाजिन्वलवान्वलेनव्वाजजिच्चभवसमनेचपारयिष्ष्णुः ॥

वाजिनोवाजजितोवाजꣳसरिष्ष्यन्तोबृहस्प्पतेर्भागमवजिग्घ्रत
॥ ९ ॥ [ ५ ] देवस्याहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसंवसोबृहस्प
तेरुत्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्यसंवसऽइन्द्रस्यो
त्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसोबृहस्प्पते
रुत्तमन्नाकंमरुहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसऽइन्द्रस्यो
त्तमन्नाकंमरुहम् ॥ १० ॥ बृहस्प्पतेवाजंम ॥ बृहस्प्पतेवाजञ्जयबृ
हस्प्पतयेवाचंवदतबृहस्प्पतिंवाजञ्जापयत ॥ इन्द्रवाजञ्जयेन्द्राय

वाचंवदतेन्द्रंवाजंज्ञापयत ॥ ११ ॥ एषावं÷ ॥ एषावऽसासत्त्यासं
वागंभूद्ययावृहस्प्पातिंवाजमजीजपताजीजपतवृहस्पतिंवाजंवन
स्पतयोविमुंञ्चयद्ध्वम् ॥ एषावऽसासत्त्यासंवागंभूद्ययेन्द्रंवाजमजी
जपताजीजपतेन्द्रंवाजंवनंस्पतयोविमुंञ्चयद्ध्वम् ॥ १२ ॥ देवस्या
हम् ॥ देवस्याहᳪसंवितुःसवेसत्त्यप्प्रंसवसोवृहस्पतेंर्वाजजितोवा
जंजेषम् ॥ वाजिनोवाजजितोद्ध्वंनस्कभ्नुवन्तोयोजंनामिमानाऽ
काष्ठांङ्गच्छत ॥ १३ ॥ एषस्यं ॥ एषस्यवाजीक्षिपणिन्तुरण्ययतिग्ग्री

वायांम्वृद्धोऽअंपिकुक्षऽआसनि ॥ क्रतुंन्दधिक्क्राऽअनुंसह्सनिष्य
दत्त्पथामङ्क्रा᳝ᳫस्यन्त्वापनींफणत्स्वाहां ॥ १४ ॥ उतस्म्म ॥ उतस्म्मा
स्यद्रवंतस्तुरण्यतश्पुर्णन्नवेरनुंवातिप्प्रगर्द्धिनं÷ ॥ श्येनस्येवुध्रजंताऽ
अङ्कसम्परिंदधिक्क्राव्णं÷सुहोर्ज्जांतरित्रतंस्वाहां ॥ १५ ॥ शन्नं÷ ॥
शन्नोभवन्तुवाजिनोहवेषुदेवतांतामितद्रंवंस्वुर्क्का॰ ॥ जम्भयन्तो
हिंवृकंह्रक्षांᳫसिसनेंम्म्यस्म्मद्युयवन्नमीवांं ॥ १६ ॥ तेनं÷ ॥ तेनो
ऽअवैन्तोहवनश्श्रुतोहवंव्विश्श्वेशृण्वन्तुवाजिनोमितद्रंवंं ॥ सहस्र

सामेधसांतासनिष्व्यवौंमहोयेधनंऽसमिथेषुंजभ्रिरे ॥ १७॥ व्वाजे
वाजेवत ॥ व्वाजिनोनोधनेंषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमद्ध्वं
पिबतमादयंद्धन्तृप्तायातपथिभिर्देवयानैः ॥ १८ ॥ आमाव्वाज
स्यप्रसवोजंगम्म्यादेमेद्यावापृथिवीव्विश्वरूपे ॥ आमांगन्ताम्पित
रांमातराचामासोमोऽअमृतत्वेनंगम्म्यात् ॥ व्वाजिनोव्वाजजितो
व्वाजंऽससृवांऽसोबृहस्पतेर्भागमवंजिघ्रतानिमृजानाः ॥ १९ ॥
[ १० ] आपयेस्वाहा ॥ स्वापयेस्वाहापिजायस्वाहाक्रतवेस्वाहाव्वसं

वेस्वाहाहर्प्पतयेस्वाहान्हेमुग्धायस्वाहामुग्धायवैनꣳशिनायस्वाहा
व्विनꣳशिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवनस्य
पतयेस्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्य्यज्ञेन । कल्पताम्प्राणो
यज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्पताꣳश्रोत्रंय्यज्ञेनकल्पताम्पृष्ठं
य्यज्ञेनकल्पतांय्यज्ञोयज्ञेनकल्पताम् ॥ प्रजापतेऽप्रजाऽअभूम
स्वर्द्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥ अस्म्मेवः ॥ अस्म्मेवोऽअ
स्त्विन्द्रियमस्म्मेनृम्म्णमुतक्क्रतुरस्म्मेवर्च्चाꣳसिसन्तुवः ॥ नमोमा

त्रे पृथिव्यै नमो मात्रे पृथिव्या इयन्ते राड्यन्तासि यमनो ध्रुवोसि धरुणः॥ कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा॥२२॥[३] वाजस्येमम् ॥ वाजस्येमम्प्रसवः सुषुवे ग्ग्रे सोमḍ राजानमोषधीष्वप्सु ॥ ता अस्मभ्यम्मधुमतीर्भवन्तु वयḍ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ २३ ॥ वाजस्येमाम् । वाजस्येमाम्प्रसवः शिश्रिये दिवमिमाञ्च विश्वा भुवनानि सम्म्राट् ॥ अदित्सन्तन्दापयति प्प्रजानन्त्स नो रयिḍ सर्ववीरन्नियच्छतु स्वाहा ॥ २४ ॥ वाजस्यनु । प्प्रसव आब

भूवेमाचविश्वाभुवनानिसर्वतः ॥ सनेमिराजापरियातिविद्वान्प्र
जांपुष्टिंवर्द्धयमानोऽअस्मेस्वाहा ॥ २५ ॥ सोमᳬराजानम् । सोमᳬ
राजानमवसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुᳬसूर्य्यम्ब्रह्मा
णञ्चबृहस्पतिᳬस्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्पतिम् ॥ अर्य्यम
णम्बृहस्पतिमिन्द्रन्दानायचोदय ॥ वाचंविष्णुᳬसरस्वतीᳬसवि
तारञ्चवाजिनᳬस्वाहा ॥ २७ ॥ अग्नेअच्छा ॥ अग्नेअच्छावदेहनᳬप्र
तिनᳬसुमनाभव ॥ प्रनोयच्छसहस्रजित्त्वᳬहिधनदाऽअसिस्वाहा

॥ २८ ॥ प्रनः॥ प्रनोयच्छत्त्वर्य्यमाप्रपूषाप्रबृहस्पतिः ॥ प्रवाग्देवीददातुनःस्वाहा ॥ २९ ॥ देवस्यत्त्वासवितुःप्प्रसवेश्विनोर्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्प्पतेष्ट्वासाम्म्राज्ज्येनाभिषिञ्चाम्म्यसौ ॥ ३० ॥[८] अग्निरेकाक्षरेण । प्प्राणमुदजयत्तमुज्जेषमश्विनौद्व्यक्षरेणद्विपदोमनुष्ष्यानुदजयत्तान्तानुज्जेषंविष्ष्णुस्त्र्यक्षरेणत्रीँल्लोकानुदजयत्तानुज्जेषꣳसोमश्चतुरक्षरेणचतुष्ष्पदःपशूनुदजयत्तानुज्जेषम्पूषापञ्चाक्षरेण

॥ ३१ ॥ पूषा पञ्चाक्षरेण । पञ्च दिशऽउदजयत्ताऽउज्जेषꣳ सविता षडक्षरेण षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्त ग्राम्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्षरेण ॥ ३२ ॥ मित्रो नवाक्षरेण । त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्रऽएकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषं विश्वे देवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषं वसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ वसवस्त्रयोदशाक्षरेण ।

त्रयोदशꣳस्तोममुदजयँस्तमुज्जेषꣳ रुद्राश्चतुर्दशाक्षरेणचतुर्दशꣳ
स्तोममुदजयँस्तमुज्जेषमादित्याःपञ्चदशाक्षरेणपञ्चदशꣳस्तोममु
दजयँस्तमुज्जेषमदितिꣳषोडशाक्षरेणषोडशꣳस्तोममुदजयत्तमुज्जे
षम्प्रजापतिꣳसप्तदशाक्षरेणसप्तदशꣳस्तोममुदजयत्तमुज्जेषम् ॥
॥३४॥[४] एषते । निर्ऋतेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवे
भ्यःपुरःसद्भ्यःस्वाहायमनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहा
विश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्यो

वामरुन्नेत्रेभ्योवादेवेभ्यंऽउत्तरासद्भ्यंःस्वाहासोमंनेत्रेभ्योदेवे
भ्यंऽउपरिसद्भ्योदुवंस्वद्भ्युंःस्वाहां ॥ ३५ ॥ येदेवाऽअग्निनेत्राःपुरः
सदस्तेभ्यःस्वाहायेदेवायमनेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवा
विश्वदेवनेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवामित्रावरुणनेत्रावाम
रुन्नेत्रावोत्तरासदस्तेभ्यःस्वाहायेदेवाःसोमनेत्राऽउपरिसदोदुवं
स्वन्तस्तेभ्यःस्वाहां ॥ ३६ ॥ अग्नेसहंस्व ॥ अग्नेसहंस्वपृतंनाऽअ
भिमांतीरपांस्य ॥ दुष्टरस्तरन्नरांतीर्वर्चोधांयज्ञवांहसि ॥ ३७ ॥ देवस्य

त्वा ॥ सवितुश्प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ उपाꣳ
शोर्व्वीर्य्येणजुहोमिहतꣳरक्षꣳस्वाहारक्षसान्त्वावधायावधिष्म्मर
क्षोवधिष्म्मामुमसौहतः ॥३८॥ [४]सवितात्त्वासवानाꣳसुवताम
ग्निर्ग्गृहपतीनाꣳसोमोव्वनस्प्पतीनाम् ॥ बृहस्प्पतिर्व्वाचऽइन्द्रोज्ज्यै
ष्ठ्यायरुद्रश्पशुब्भ्योमित्रश्सत्त्योव्वरुणोधर्म्मपतीनाम् ॥ ३९ ॥ इम
न्देवाꣳ ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्त्रायमहतेज्ज्यैष्ठ्याय
महतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्ष्यपुत्त्रममुष्ष्यैपुत्त्रम

स्यैविशऽएषवोमीराजासोमोस्म्माकंब्राह्मणानाᳬराजा ॥ ४० ॥
[२]॥८॥इतिश्रीवाजसनेयसंहितायांनवमोऽध्यायः ॥९॥श्रीवेदपुरु
षायनमः ॥ अनुवाक्सूत्रम ॥ अपोदेवाश्चतस्रःसोमस्यत्विषिःपंचा
वेष्टाःसप्त सोमस्यत्वाचतस्रइंद्रस्यवज्रःपंचस्योनासिचतस्रः सवित्रे
काश्विभ्यांचतस्रोष्टौचतुस्त्रिᳬशत् ॥ हरिःॐअपोदेवाः ॥ अपोदेवा
मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणा
वभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्णऽऊर्मिः ॥ वृ

ष्णांऽऊर्म्मिरांसिराष्ट्रदाराष्ट्रम्मेंदेहिस्वाहावृष्णांऽऊर्म्मिरांसिराष्ट्रदा
राष्ट्रमसुष्म्मैंदेहिवृषसेनोसिराष्ट्रदाराष्ट्रम्मेंदेहिस्वाहावृषसेनोसिरा
ष्ट्रदाराष्ट्रमसुष्म्मैंदेह्युत्थैंतंस्त्थ ॥ २ ॥ अत्थैंतंस्त्थराष्ट्रदाराष्ट्रम्मेंद
त्तस्वाहात्थैंतंस्त्थराष्ट्रदाराष्ट्रमसुष्म्मैंदत्तौजंस्वतीस्त्थराष्ट्रदाराष्ट्र
म्मेंदत्तस्वाहौजंस्वतीस्त्थराष्ट्रदाराष्ट्रमसुष्म्मैंदत्तापं÷परिवाहिणी
स्त्थराष्ट्रदाराष्ट्रम्मेंदत्तस्वाहापं÷परिवाहिणीस्त्थराष्ट्रदाराष्ट्रमसु

ष्मैंदत्तापाम्पतिंरसिराष्ट्रदाराष्ट्रम्मेंदेहिस्वाहापाम्पतिंरसिराष्ट्रदा
राष्ट्रममुष्मैंदेह्यपाङ्गर्भोसिराष्ट्रदाराष्ट्रम्मेंदेहिस्वाहापाङ्गर्भोसि
राष्ट्रदाराष्ट्रममुष्मैंदेहिसूर्य्यत्वचसस्त्थ ॥ ३ ॥ सूर्य्यत्वचसस्त्थ ।
राष्ट्रदाराष्ट्रम्मेंदत्तस्वाहासूर्य्यत्वचसस्त्थराष्ट्रदाराष्ट्रममुष्मैंदत्तसू
र्य्यवर्चसस्त्थराष्ट्रदाराष्ट्रम्मेंदत्तस्वाहासूर्य्यवर्चसस्त्थराष्ट्रदाराष्ट्रममु
ष्मैंदत्तमान्दास्त्थराष्ट्रदाराष्ट्रम्मेंदत्तस्वाहामान्दास्त्थराष्ट्रदाराष्ट्र

मुमुष्मैदत्तव्रजक्षितंस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाव्रजक्षितंस्त्थरा
ष्ट्रदाराष्ट्रममुष्मैदत्तवाशास्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहावाशास्थरा
ष्ट्रदाराष्ट्रममुष्मैदत्तशविष्ठास्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशविष्ठा
स्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्करीस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्क
रीस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तजनभृतंस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहा
जनभृतंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतंस्त्थराष्ट्रदाराष्ट्रम्मेद

त्तस्वाहा॥ विश्वभृतं॑स्त्थराष्ट्रदाराष्ट्रममुष्मै॑दत्तापं॑÷स्वराजं॑स्त्थराष्ट्र
दाराष्ट्रममुष्मै॑दत्त ॥ मधुमतीर्म्मधुमतीभिꣳपृच्यन्तामहिक्षत्रङ्क्ष
त्रियायवन्वानाऽअनाधृष्टाꣳसीदतसहौजं॑सोमहिक्षत्रङ्क्षत्रियायद
धंतीꣳ ॥ ४ ॥ [४] शतम् ॥ ४०० ॥ सोमं॑स्यत्त्विषिं॑÷ ॥ सोमं॑स्यत्त्विषि
रसितवैवमेत्त्विषिं॑र्भूयात् ॥ अग्नयेस्वाहासोमायस्वाहासवित्रेस्वा
हासरस्वत्त्यैस्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वाहाघोषाय
स्वाहाश्श्लोकायस्वाहाꣳशायस्वाहाभगायस्वाहार्य्यम्णेस्वाहा

॥ ५ ॥ पवित्रेस्त्थः ॥ पवित्रेस्त्थोवैष्णव्व्यौसवितुर्व्वः प्प्रसवऽउत्पु
नाम्म्यच्छिद्द्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसिवाचो
बन्धुस्तपोजाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्यु
म्म्निनीः ॥ सधमादोद्युम्म्निनीरापऽएताऽअनाधृष्टाऽअपस्योवसा
नाः ॥ पस्त्यासुचक्क्रेवरुणःसधस्त्थमपाᳬंशिशुर्म्मातृतमास्वन्तः
॥ ७ ॥ क्षत्रस्योल्बम ॥ क्षत्रस्योल्बमसिक्षत्रस्यजराय्व्वसिक्षत्रस्ययो
निरसिक्षत्रस्यनाभिरसीन्द्रस्यवार्त्रघ्घ्नमसिमित्रस्यासिवरुणस्यासि

त्वयायंवृत्रंवधेत् ॥ दूवासिरुजासिक्षुमासि ॥ पातैनम्प्राञ्चम्पातैनं
म्प्रत्यञ्चम्पातैनंन्तिर्य्यञ्चन्दिग्भ्यःपात ॥ ८ ॥ आविर्म्मर्य्याः ॥
आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रोवृद्धश्रवाऽ
आवित्तौमित्रावरुणौधृतव्रतावावित्तःपूषाविश्ववेदाऽआवित्तेद्या
वापृथिवीविश्वशम्भुवावावित्तादितिरुरुशर्म्मा॥९॥[५]अवेष्टादन्द
शूकाः ॥ अवेष्टादन्दशूकाःप्राचीमारोहगायत्रीत्त्वावतुरथन्तरꣳ
सामत्रिवृत्स्तोमोवसन्तऽऋतुर्ब्रह्मद्रविणन्दक्षिणामारोह ॥ १० ॥

दक्षिणामारोह । त्रिष्टुप्त्वांवतुबृहत्सामपञ्चदशस्तोमोग्ग्रीष्मऽऋ
तुःक्षत्रन्द्रविणम्प्रतीचीमारोह ॥११॥ प्रतीचीमारोह । जगतीत्त्वाव
तुवैरूपꣳसामसप्तदशस्तोमोवर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह
॥ १२ ॥ उदीचीमारोहानुष्टुप्त्वांवतुवैराजꣳसामैकविꣳशस्तोमः
शरदृतुःफलन्द्रविणमूर्द्ध्वमारोह ॥१३॥ ऊर्द्ध्वमारोह । पङ्क्तिस्त्वांवतु
शाक्वररैवतेसामनीत्रिणवत्रयस्त्रिꣳशौस्तोमौहेमन्तशिशिरावृतूव
र्चोद्रविणम्प्रत्यस्तन्नमुचेःशिरः ॥ १४ ॥ सोमस्यत्त्विषिः ॥ सोम

स्यात्त्विषिरसितवैवमेत्विषिम्भूयात् ॥ मृत्योःपाह्योजोसिसहोस्य
मृतमसि ॥ १५ ॥ हिरण्यरूपाऽउषसोविरोकऽउभाविन्द्राऽउदिथः
सूर्य्यश्च ॥ आरोहतंवरुणमित्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमि
त्रोसिवरुणोसि ॥ १६ ॥ [७] सोमस्यत्त्वाद्युम्नेनाभिषिञ्चाम्म्यग्ने
र्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्येन्द्रियेण ॥ क्षत्राणाङ्क्षत्रपतिरेध्यतिदि
द्यून्पाहि ॥ १७ ॥ इमन्देवाः ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमम

मुष्ष्यैपुत्रममुष्ष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्म्माकम्ब्रा
ह्मणानाꣳराजा ॥ १८ ॥ प्रपर्वतस्य ॥ वृषभस्यपृष्ठान्नावश्चरन्तिस्व
सिचऽइयानाः ॥ ताऽआववृत्रन्नधरागुदक्काऽअहिम्बुध्न्यमनुरीय
माणाः ॥ विष्णोर्विक्क्रमणमसिविष्णोर्विक्क्रान्तमसिविष्णोःक्क्रा
न्तमसि ॥ १९ ॥ प्रजापतेन । त्वदेतान्यन्न्योविश्वारूपाणिपरिताव
भूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्ष्यपितासावस्यपिता
वयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ रुद्रयत्तेक्क्रिविपरन्नामतस्म्मि

न्हुतमस्यमेष्ट्रमसिस्वाहा ॥ २० ॥ [४] इन्द्रस्यव्वज्ज्रं ÷ ॥ इन्द्रस्यव्व
ज्ज्रोसिमित्रावरुणयोस्त्वाप्प्रशास्त्रोः प्प्रशिषायुनज्म्मि ॥ अव्यथा
यैत्त्वास्वधायैत्त्वारिष्टोऽअर्ज्जुनोमरुताम्प्रसवेनजयापाममनसास
मिन्द्रियेण ॥ २१ ॥ मातै ॥ मातऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअ
ब्रह्मताविदसाम ॥ तिष्ठारथमधियंव्वज्ज्रहस्तारश्मीन्देवयमसे
स्वश्श्वान्॥२२॥ अग्नयेगृहपतये ॥ अग्नयेगृहपतयेस्वाहासोमायवन
स्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ॥ पृथिविमा

तम्मामाहिꣳसीम्मोऽअहन्त्वाम् ॥२३॥ हꣳसः शुचिषत् ॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत्॥नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २४ ॥ इयदसि ॥ इयदस्यायुरस्यायुर्म्मयिधेहियुङ्ङसिवर्च्चोसिवर्च्चोमयिधेह्यूर्ग्गस्यूर्ज्जम्मयिधेहि ॥ इन्द्रस्यवांवीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥ [५] स्योनासि । सुषदासिक्षत्रस्ययोनिरसि ॥ स्योनामासीद सुषदामासीदक्षत्रस्ययोनिमासीद ॥ २६ ॥ निषसाद ॥ धृतव्रतोवरु

णश्पुस्त्यास्वा ॥ साम्म्राज्यायसुक्रतुं÷ ॥ २७ ॥ अभिभूरसि ॥ अ
भिभूरस्येतास्तेपञ्चदिशं÷कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासिसविता सि
सत्यप्प्रंसवोव्वरुणोसिसत्यौजाऽइन्द्रोसिव्विशौजारुद्रोसिसुशेवं÷ ॥
वहुकारश्रेयंस्करभूयंस्करेन्द्रंस्यवज्जोसितेनंमेरध्य ॥ २८ ॥ अग्नि
ं पृथुश् ॥ अग्निश्पृथुर्द्धर्म्मणस्पतिंर्ज्जुषाणोऽअग्निश्पृथुर्द्धर्म्मणस्पाति
राज्यंस्यवेतुस्वाहास्वाहाकृताऽसूर्य्यस्यरश्मिभिर्य्यतद्ध७सजाता
नांम्मध्यमेष्ठ्यांय ॥ २९ ॥ [४] सवित्राप्प्रंसवित्रा ॥ सरस्वत्याव्वाचा

त्वष्ट्रारूपैश्पूष्णापशुभिरिन्द्रेणास्म्मेबृहस्पतिनाब्रह्मणावरुणे
नौजसाग्निनातेजसासोमेनराज्ञाविष्णुनादशम्म्यादेवतयाप्प्रसूत
ऽप्प्रसर्प्पामि ॥ ३० ॥ [१] अश्विभ्यांम्पच्यस्व ॥ अश्विभ्यांम्पच्य
स्वसरस्वत्यैपच्यस्वेन्द्रायसुत्राम्मणेपच्यस्व ॥ वायुश्पूतश्पवित्रेणप्प्र
त्यङ्क्सोमोऽअतिस्त्रुतऽ ॥ इन्द्रस्ययुज्ज्यऽसखा ॥ ३१ ॥ कुविदङ्ग ।
यवमन्तोयवञ्चिद्यथादान्त्यनुपूर्व्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजना
नियेबर्हिषोनमऽउक्तिंय्यजन्ति ॥ उपयामगृहीतोस्यश्विभ्यां

न्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्णे ॥ ३२ ॥ युवꣳसुराममम् ॥ युवꣳसुराममश्विनानमुचावासुरेसचा ॥ विपिपानाशुभस्पतीऽइन्द्रङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिवपितरौ ॥ पुत्रमिवपितरावश्विनोभेन्द्रावथुङ्काव्यैर्द्दꣳसनाभिः ॥ यत्सुराम्व्यपिबःशचीभिःसरस्वतीत्त्वामघवन्नभिष्णक् ॥ ३४ ॥ [ ४ ] ॥ ८ ॥ इतिश्रीवाजसनेयसंहितायांदशमोऽध्यायः ॥ १० ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ युंजानएकादशप्रतूर्त्तꣳषोडशदेवस्यत्वादशापोदेवीद्वादशापोह्ये

कादशादितिद्वापंचाकूतिमष्टादशससत्र्यशीतिः । हरिः ॐयुञ्जान

ꣳप्प्रंथममम् ॥ युञ्जानꣳप्प्रंथमम्मनंस्तत्त्वायंसविताधियं÷ ॥ अग्ने

ज्ज्योतिंर्न्निचाय्यंपृथिव्व्याऽअध्याभंरत्॥ १॥युक्केनमनंसा।वयन्देव

स्यंसवितुꣳसवे॥ स्वर्ग्यायशक्क्या॥ २॥ युक्कायंसविता। देवान्त्स्वं

र्य्यंतोधियादिवम्॥ बृहज्ज्योतिं÷करिष्ष्यतꣳसंवितापप्रसुंवातितान्

॥ ३ ॥ युञ्जतेमनं÷ ॥ युञ्जतेमनंऽउतयुञ्जतेधियोविप्प्राविप्प्रंस्यबृह

तोविंपश्चितं÷ ॥ विहोत्रांदधेवयुनाविदेकऽइन्महीदेवस्यंसवितुꣳप

रिंष्टुतिः ॥ ४ ॥ युजेवाम् ॥ युजेवाम्ब्रह्मंपूर्व्यन्नमोभिर्विश्लोकंऽ
एतुपथ्येवसूरेः ॥ शृण्वन्तुविश्वेऽअमृतस्यपुत्राऽआयेधामांनिदि
व्यानितस्थुः ॥ ५ ॥ यस्यंप्रयाणम् । यस्यंप्रयाणमन्वन्यऽइद्ययु
र्देवादेवस्यंमहिमानमोजंसा ॥ यःपार्थिवानिविममेसऽएतंशोरजां
सिदेवःसंविताम॑हित्वना ॥ ६ ॥ देवंसवितः ॥ देवंसवितःप्रसुव
यज्ञम्प्रसुवयज्ञपंतिम्भगांय ॥ दिव्योगंधर्वःकेतपूःकेतन्नःपुनातुवा
चस्पतिर्वाचंन्नःस्वदतु ॥ ७ ॥ इमन्नः ॥ इमन्नोदेवसवितर्यज्ञम्प्र

र्णयदेवाव्य॑ᳪसखिविदᳪसत्राजितन्धनजितᳪस्वर्जितम् ॥ ऋचा
स्तोमᳪसमर्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्तनिस्वाहा ॥ ८ ॥ देव
स्यत्वा। सवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आद
देगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याःसधस्थादग्निम्पुरीष्यमङ्गि
रस्वदाभरत्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि । नार्यसि
त्वयावयमग्निᳪशकेमखनितुᳪसधस्थऽआ ॥ जागतेनच्छन्दसा
ङ्गिरस्वत् ॥ १० ॥ हस्तऽआधाय । सविताबिभ्रदभ्रिᳪहिरण्यय

यीम् ॥ अग्नेर्ज्ज्योतिर्न्निचाय्यंपृथिव्याऽअद्ध्याभरदानुष्टुभेनच्छन्द
साङ्गिरस्वत् ॥ ११ ॥ [११] प्रतूर्त्तंवाजिन् ॥ प्रतूर्त्तंवाजिन्नाद्द्रववारि
ष्ठामनुसंवतम् ॥ दिवितेजन्मपरममन्तरिक्षेतवनाभिः पृथिव्यामध
धियोनिरित् ॥ १२ ॥ युञ्जाथाꣳरासभम् ॥ युञ्जाथाꣳरासभंय्युव
मस्मिन्यामेवृषण्वसू ॥ अग्निम्भरन्तमस्म्मयुम् ॥ १३ ॥ योगे
योगेतवस्तरम् ॥ योगेयोगेतवस्तरंव्वाजेवाजेहवामहे ॥ सखायऽइन्द्र
मूतये ॥ १४ ॥ प्रतूर्व्वन्नेहि ॥ प्रतूर्व्वन्नेह्यवक्क्रामन्नशस्तीरुद्द्रस्यगाणप

त्त्यम्मयोभूरेहि ॥ उर्व्वन्तरिक्षंव्वीहिस्वस्तिगव्यूतिरभंयानिकृण्वन्पू
ष्णासयुजासह ॥ १५ ॥ पृथिव्याःसधस्त्थात् ॥ पृथिव्याःसधस्त्था
दग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्नि
म्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निः ॥ अन्वग्निरु
षसामग्ग्रमक्ख्यदन्वहानिप्प्रथमोजातवेदाः ॥ अनुसूर्य्यस्यपुरुत्रा
चरश्मीननुद्यावापृथिवीऽआततंथ ॥ १७ ॥ आगत्त्यंव्वाजी ॥ आ
गत्त्यंव्वाज्यद्ध्वानꣳसर्व्वामृधोविधूनुते ॥ अग्निꣳसधस्त्थेमहतिचक्षु

पानिचिंकीपते॥१८॥ आक्रम्म्यंवाजिन् ॥ आक्रम्म्यंवाजिन्पृथिवी
मग्निमिच्छरुचात्त्वम् ॥ भूम्म्यांवृत्त्वायंनोब्रूहियतऽखनेमतंवयम्
॥१९॥ द्यौस्ते। पृष्ठम्पृथिवीसधस्त्थमात्मान्तरीक्ष६समुद्रोयोनिः॥
विक्ख्यायचक्षुषात्त्वमभितिष्ठपृतन्न्यतः ॥ २० ॥ उत्क्राम । महते
सौभगायास्म्मादास्त्थानाद्द्रविणोदावाजिन् ॥ वय६स्यामसुमतौ
पृथिव्याऽअग्निङ्खनन्तऽउपस्थेअस्याः ॥ २१ ॥ उदक्रमीत् ॥ उदक्र
मीद्द्रविणोदावाज्ज्यर्वाकऽसुलोक६सुकृतम्पृथिव्याम् ॥ ततःखने

मसुप्प्रतीकमग्निᳪस्वोरुहाणाऽअधिनाकमुत्तमम् ॥ २२ ॥ आत्त्वा
जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिविश्वा ॥ पृथुन्तिर
श्चावयसाबृहन्तंव्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥ आविश्वतः ।
प्प्रत्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत ॥ मर्य्यश्रीस्पृहयद्वर्णोऽ
अग्निर्नाभिमृशेतन्वाजर्भुराणः ॥ २४ ॥ परिवाजपतिः ॥ परिवा
जपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ २५ ॥
परित्वा । ग्ग्नेपुरंवयंविप्प्रᳪसहस्यधीमहि ॥ धृषद्वर्णन्दिवेदिवेहन्ता

रम्भङ्गुरावंताम् ॥ २६ ॥ त्वमंग्ने । द्युभिस्त्वमांशुशुक्षणिस्त्वमुद्भ्य
स्त्वमश्म्मंनस्प्पारिं ॥ त्वंव्वनेंब्भ्यस्त्वमोषंधीब्भ्यस्त्वन्नृणान्नृंपतेजा
यसेशुचिंः ॥ २७ ॥ [ १६ ] देवस्यंत्त्वा । सवितुश्प्रंसवेश्विनोर्ब्बाहु
ब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ पृथिव्याःसधस्त्थांदुग्निम्पुंरीष्ष्यमङ्गि
रस्वत्त्वंनामि ॥ ज्योतिष्म्मन्तन्त्वाग्नेसुप्प्रतींकमजंस्त्रेणभानुना
दीद्यंतम् ॥ शिवम्प्रजाब्भ्योहिंᳩसन्तम्पृथिव्याःसधस्त्थादुग्निम्पु
रीष्ष्यमङ्गिरस्वत्त्वंनामः ॥ २८ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमंसियो

निरग्ग्नेःसंमुद्रमुभितऽपिन्वंमानम् ॥ वर्द्धमानोमहाँ २ ऽआचपुष्क
रेदिवोमात्रयावरिम्णाप्प्रथस्व ॥ २९ ॥ शर्म्मंच ॥ शर्म्मंचस्त्थोव
र्म्मंचस्त्थोच्छिद्रेबहुलेऽउभे ॥ व्यचस्वतीसंवसाथाम्भृतमग्निम्पुरी
ष्यम् ॥ ३० ॥ संवसाथाम् ॥ संवसाथाᳪस्वर्विदासमीचीऽउरसा
त्मना ॥ अग्निमन्तर्ब्भरिष्यन्तीज्योतिष्मन्तमजस्रमित् ३१
पुरीष्योसि । विश्वभराऽअथर्वात्वाप्प्रथमोनिरमन्थदग्ने ॥ त्वाम
ग्नेपुष्करादध्यथर्वानिरमन्थत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ ३२ ॥

तमुत्त्वा । दुध्यङ्ङृषिं÷पुत्रऽईधेऽअथर्व्वणः ॥ व्वृत्रहणंम्पुरन्दरम् ॥ ३३
तमुत्त्वा । पाृत्थ्योव्वृषासमींधेदस्युहन्तंमम् ॥ धनञ्जयꣳरणेरणे
॥ ३४ ॥ सीदंहोतꣳ ॥ सीदंहोतःस्वऽउंलोकेचिकित्वान्त्सादयांय
ज्ञꣳसुकृतस्ययोनौं ॥ देवावीर्देवान्हविषांयजास्यग्नेबृहद्यजंमाने
व्वयोंधाꣳ ॥ ३५ ॥ निहोतां । होतृषदनेविदांनस्त्वेषोदींदिवाँ२ ऽअंस
दत्सुदक्षं÷ ॥ अदंब्धव्रतप्प्रमतिर्व्वसिष्ठꣳसहस्त्रम्भरꣳशुचिंजिह्वोऽअ
ग्निꣳ॥ ३६॥ सꣳसींदस्वमहाँ२ अंसिशोचंस्वदेववीतंमः ॥ विधूमम्

ग्रेऽअरुषम्मिमयेद्ध्यसृजप्प्रंशस्तदर्शतम्॥३७॥[१०] अपोदेवीः॥ अ
पोदेवीरुपंसृजमधुमतीरयक्ष्मायप्प्रजाभ्यः॥ तासांमास्थानादु
ज्जिहतामोषधयःसुपिप्पलाः॥३८॥ सन्ते। व्वायुर्म्मातरिश्वादधातू
त्तानायाहृदयंयद्विकस्तम्॥ योदेवानाञ्चरंसिप्प्राणथेनकस्म्मैदेव
वषडस्तुतुभ्यम्॥ ३९॥ सुजातोज्ज्योतिषा। सहशर्म्मव्वरूथमा
संदस्वः॥ व्वासोऽअग्नेविश्वरूपंसंव्ययस्वविभावसो॥ ४०॥
उदुतिष्ठ। स्वध्वरावानोदेव्याधिया॥ दृशेचभासाबृहतासुशुक्कनि

राग्नेयाहिसुशास्तिभिः॥४१॥ऊर्द्ध्वऽऊषुणः॥ऊर्द्ध्वऽऊषुणऽऊतयेति
ष्ठांदेवोनसंविता॥ऊर्द्ध्वोवाजंस्यसनितायदुञ्जिभिर्वाघद्भिर्विह्वयामहे
॥ ४२॥ सजातः ॥ सजातोगर्भोऽअसिरोदंस्योरग्नेचारुर्विभृंतऽओ
षधीषु ॥ चित्रःशिशुःपरितमांᳪस्यक्तूम्प्रमातृभ्योऽअधिकनिक्क
दद्गाः ॥ ४३ ॥ स्थिरोभंव । वीड्वङ्गऽआशुर्भववाज्यर्वन् ॥ पृथुर्भ
वसुषदस्त्वमग्नेःपुरीषवाहंनः ॥ ४४ ॥ शिवोभंव । प्रजाभ्योमा
नुंषीभ्यस्त्वमंङ्गिरः ॥ माद्यावांपृथिवीऽअभिशौचीर्म्मान्तरिक्ष

म्मावनस्पतीँन् ॥४५॥ प्रैतु ॥ वाजीकनिँक्रदुन्नानंदुद्रासंभःपत्वाँ ॥
भरंन्नग्निम्पुंरीष्यम्मापाद्यायुंषःपुरा ॥ वृषाग्निम्वृषंणम्भरंन्नपाङ्ग
र्भंᳬसमुद्रियंम् ॥ अग्नऽआयाँहिवीतयें ॥ ४६ ॥ ऋतᳬसत्त्यमृतᳬ
सत्यमग्निम्पुंरीष्यमङ्गिरस्वद्भरामः ॥ ओषंधयःप्पातिंमोदद्ध्वमग्नि
मेतᳬशिवमायन्तंमब्भ्यत्त्रंयुष्माः ॥ व्यस्यन्विश्वाऽअनिराऽअ
मीवानिषीदंन्नोऽअपंदुर्म्मतिञ्जंहि ॥ ४७ ॥ ओषंधयःप्पातिं ॥ ओषं
धयःप्पातिंगृभ्णीतपुष्पंवतीःसुपिप्पलाः ॥ अयंव्वोगर्भंऽऋत्त्वि

यं॒ऽप्प्रत्क६॑सुधस्त्थमासंदत् ॥ ४८ ॥ विपाजंसा ॥ पृथुना॒शोशुंचा
ना॒बाधंस्वद्विषोर॒क्षसो॒ऽअमींवाः॑ ॥ सुशम्म्मंणोबृह॒तःश॑म्म्मंणिस्या
म॒ग्नेर॒ह६॑सुहवंस्यु॒प्प्रणींतौ ॥ ४९ ॥ [ १२ ] आपो॒हि । ष्ठामंयो॒भुव॒
स्तानं॒ऽऊ॒र्जेदंधातन ॥ म॒हेरंणाय॒चक्षंसे ॥ ५० ॥ योवं॑ः । शिवतंमो॒र
सस्तस्यंभाजयते॒हनं॑ः ॥ उशतीरिंवमा॒तरं॑ः ॥ ५१ ॥ तस्म्मा॒ऽअरं॑म् ॥
तस्म्मा॒ऽअरंङ्गमामवो॒यस्य॒क्षयांय॒जिन्वंथ ॥ आपोंज॒नयंथाचनः
॥ ५२ ॥ मित्रःसु॒ह॒सृज्ज्यं ॥ पृथि॒वीम्भू॒मिञ्च॒ज्ज्योतिंषा॒सह ॥ सुजांत

ज्ञातवेदसमयक्ष्मायंत्त्वासहसृंजामिप्प्रजाभ्यं ॥ ५३ ॥ रुद्राश्सृ
सृज्यं। पृथिवीम्बृहज्ज्योतिंसमीधिरे ॥ तेषाम्भानुरजंस्रऽइच्छुक्रो
देवेषुरोचते ॥ ५४ ॥ सहसृंष्टांवसुभिः ॥ सहसृंष्टांवसुभीरुद्रैर्द्धीरैःक
र्म्मण्यांम्मृदम् ॥ हस्ताभ्याम्मृद्वीङ्कृत्वासिनीवालीकृणोतुताम्
॥ ५५ ॥ सिनीवालीसुकपर्द्दा। सुंकुमारीरास्वौपशा ॥ सातुभ्यंम
दितेमह्योखान्दंधातुहस्तंयोः ॥ ५६ ॥ उषाङ्कृणोतु। शक्त्यांबाहुभ्या
मदितिर्द्धिया ॥ मातापुत्रंय्यथोपस्थेसाग्निम्बिभर्त्तुगर्भऽआ ॥

मखस्यशिरोसि ॥ ५७ ॥ वसवस्त्वा । कृण्वन्तुगायत्रेणच्छन्दसा
ङ्गिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिप्रजाᳬरायस्पोषङ्गौपत्त्यᳬ
सुवीर्य्यᳬसजातान्यजमानायरुद्रास्त्वाकृण्वन्तुत्रैष्टुभेनच्छन्द
साङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्रजाᳬरायस्पोषङ्गौप
त्त्यᳬसुवीर्य्यᳬसजातान्यजमानायादित्यास्त्वाकृण्वन्तुजागते
नच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्रजाᳬरायस्पोष
ङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्यजमानायविश्वेत्त्वादेवावैश्वानराः

कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधारयामयि
प्प्रजाᳪरायस्प्पोषङ्गौपत्त्यᳩसुवीर्य्यᳩसजातान्यजमानाय ॥५८
अदित्त्यैरास्ना ॥ अदित्त्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु । कृत्त्वाय
सामहीमुखामृन्मयीँयोनिमग्नये ॥ पुत्रेभ्यᳩप्प्रायच्छददितिᳩ
श्रपयानिति ॥५९॥ वसवस्त्वा । धूपयन्तुगायत्त्रेणच्छन्दसाङ्गिर
स्वद्रुद्रास्त्वाधूपयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्त्यास्त्वाधूपय
न्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वानुष्टु

भेनच्छन्दंसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णु
स्त्वाधूपयतु ॥ ६० ॥ [ ११ ] अदितिष्ट्वा । देवीर्विश्वदेव्यावतीपृथि
व्याःसधस्थेऽअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदे
व्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्वि
श्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वदभीन्धतामुखेवरूत्री
ष्ट्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखेऽ
ग्नास्त्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वत्पचन्तू

खेजनंयुस्त्वाच्छिन्नपत्राद्देवीर्व्विश्वदेव्यावतीःपृथिव्याःसुधस्त्थेऽ
अङ्गिरस्वत्पंचन्तुखे ॥ ६१ ॥ मित्रस्यंचर्षणीधृतं÷ ॥ मित्रस्यंचर्षणी
धृतोवोदेवस्यंसानुसि ॥ द्युम्नञ्चित्रश्श्रवस्तमम् ॥ ६२ ॥ देवस्त्वा ।
सवितोद्वंपतुसुपाणिःस्वंङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यंथमानापृ
थिव्यामाशादिशऽआपृंण ॥ ६३ ॥ उत्थायबृहती । भवोदुतिष्ठद्ध्रु
वात्वम् ॥ मित्रैतान्तऽउखाम्परिंददाम्म्यभिंत्त्याऽएषामाभेदि
॥ ६४ ॥ वसंवस्त्वा । च्छृन्दन्तुगायत्रेणच्छन्दंसाङ्गिरस्वद्रुद्रास्त्वा

च्छन्दन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छन्दन्तुजागते
नच्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराऽआच्छन्दन्त्वानुष्टुभेन
च्छन्दसाङ्गिरस्वत् ॥ ६५ ॥ [ ५ ] आकूतिमग्निम् ॥ आकूतिमग्नि
म्प्रयुजꣳस्वाहामनोमेधामग्निम्प्रयुजꣳस्वाहाचित्तंविज्ञातमग्नि
म्प्रयुजꣳस्वाहावाचोविधृतिमग्निम्प्रयुजꣳस्वाहाप्रजापत
येमनवेस्वाहाग्नयेवैश्वानरायस्वाहा ॥ ६६ ॥ विश्वोदेवस्य । नेतुर्मर्तो
वुरीतसख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा

॥ ८८ ॥

॥ ६७॥ मासु । भिन्त्थामासुरिपोम्वंधृष्ष्णुवीरयंस्वसु ॥ अग्निरश्चे
दङ्कंरिष्ष्यथं ॥ ६८ ॥ हृदंहंस्वदेवि । पृथिविस्वस्तयंऽआसुरीमाया
स्वधयांकृतासिं ॥ जुष्टंन्देवेब्भ्यंऽइदमंस्तुहृव्यमरिंष्टात्वमुदिंहियज्ञे
ऽअस्म्मिन् ॥ ६९ ॥ त्वंन्नंसर्प्पिरांसुतिंप्प्रत्क्कोहोतावरेंण्यं ॥ सहंस
स्प्पुत्रोऽअद्भुतं॥ ७० ॥ शतम् ॥ ५०० ॥ परंस्याऽअधिं । संवतोव
राँ२ऽअब्भ्यातंर ॥ यत्राहमास्मितांँ२ऽअंव ॥ ७१ ॥ परमस्यांंपराव
तं÷ ॥ परमस्यांंपरावतोंरोहिदंश्वऽइहागंहि ॥ पुरीष्ष्य÷पुरुप्प्रियो

ग्नेत्वन्तंरामृधं॑÷ ॥ ७२ ॥ यदंग्ने । यदंग्नेकानिकानिचिदातेदारू
णिदुध्ध्मसिं ॥ सर्वुन्तदंस्तुतेघृतन्तज्जुंषस्वयविष्ठ्य ॥७३॥ यदत्ति॥
यदत्त्युंपजिह्विकायद्वुम्म्रोऽअंतिसर्प्पंति ॥ सर्वुन्तदंस्तुतेघृतन्तज्जुंष
स्वयविष्ठ्य ॥ ७४ ॥ अहंरहुरप्प्रंयावम् ॥ अहंरहुरप्प्रंयावम्भरन्तो
श्श्वायेवतिष्ठंतेघासमंस्म्मै ॥ रायस्प्पोषेणसमिषामदुन्तोग्ग्नेमातेप्प्र
तिवेशारिषाम ॥ ७५ ॥ नाभापृथिव्याः । संमिधानेऽअग्ग्नौराय
स्प्पोषायबृहतेहवामहे ॥ इरम्मदम्बृहदुंक्थंय्यजंत्रञ्जेतारमग्ग्निम्पृ

तंनासुसासहिम् ॥ ७६ ॥ याःसेनाः ॥ याःसेनाऽअभीत्त्वरीराव्या
धिनीरुगंणाऽउत ॥ येस्तेनायेचतस्कंरास्ताँस्तेऽअग्नेपिंदधाम्म्यास्ये
॥ ७७ ॥ दंष्ट्राभ्याम्मलिम्लूंन् ॥ दंष्ट्राभ्याम्मलिम्लूञ्जम्भ्यै
स्तस्कंराँ२उत ॥ हनुंभ्यांस्तेनान्भगवस्ताँस्त्वङ्खादसुखादितान्
॥७८॥ येजनेषु । मलिम्लवस्तेनासस्तस्कंरावने ॥ येकक्षेष्वघाय
वस्ताँस्तेदधामिजम्भयोः ॥ ७९ ॥ योऽअस्म्मभ्यम् ॥ योऽअस्म्म
भ्यमरातीयाद्यश्चनोद्वेषतेजनः ॥ निन्दाद्योऽअस्म्मान्धिप्प्साच्च

सर्व्वुन्तम्मंस्म्मसाकुरु॥ ८० ॥ सᳪंशितम्मे ॥ सᳪंशितम्मेब्ब्रह्मसᳪं
शितंव्वीर्य्युंम्बलम् ॥ सᳪंशितङ्क्षत्रञ्जिष्ष्णुयस्याहमस्म्मिपुरोहितः
॥ ८१ ॥ उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्द्वर्च्चोऽअथोबलम् ॥ क्षिणो
मिब्ब्रह्मणामित्रानुन्नयामिस्वाँ२ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्य । नो
देह्यनमीवस्यशुष्म्मिणः ॥ प्पप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्द्विपदे
चतुष्ष्पदे॥ ८३॥[१८] इतिश्रीवाजसनेयसंहितायांएकादशोऽध्या
यः ॥ ११ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम ॥ इशानःसप्तदश

दिवस्परिद्वादशसमिधाग्निंपंचदशापेतसप्तदशासुन्वंतंत्रयोदशया
ओषधीसप्तविᳪशतिर्मामाषोडशसप्तसप्तदशᳪशतम्॥हरिॐदृशा
नोरुक्मः॥दृशानोरुक्मऽउर्व्याव्यद्यौद्दुर्म्मर्षमायुः श्रियेरुचानः॥
अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः॥१॥नक्तो
षासासमनसा। विरूपेधापयेतेशिशुमेकᳪसमीची॥द्यावाक्षामा
रुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः॥२॥विश्वा
रूपाणि॥विश्वारूपाणिप्रतिमुञ्चतेकविःप्रासावीद्भद्रंद्विपदेचतु

ष्पदे ॥ विनाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति
॥ ३ सुपर्णोऽसि ॥ गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ॥
स्तोमऽआत्मा छन्दाᳪंस्यङ्गानि यजूᳪंषि नाम ॥ साम ते तनूर्वाम
देव्यं यज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ॥ सुपर्णोऽसि गरुत्मान्दिवं
गच्छ स्वः पत ॥ ४ ॥ विष्णोः क्रमः ॥ विष्णोः क्रमोऽसि सपत्न
हा गायत्रञ्छन्दऽआरोह पृथिवीमनु विक्रमस्व विष्णोः क्रमोऽस्यभि
मातिहा त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनु विक्रमस्व विष्णोः क्र

मोस्यरातीयतोहन्ताजागतञ्छन्दऽआरोहदिवमनुविक्रमस्ववि
ष्णोःक्रमोसिशत्रूयतोहन्तानुष्टुभञ्छन्दऽआरोहदिशोनुविक्रम
स्व॥५॥ अक्रन्ददग्निः॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिह
द्वीरुधःसमञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअख्यदारोदसीभा
नुनाभात्यन्तः॥ ६ ॥ अग्नेभ्यावर्त्तिन् ॥ अग्नेभ्यावर्त्तिन्नभिमा
निवर्त्तस्वायुषावर्च्चसाप्रजयाधनेन ॥ सन्यामेधयारय्यापोषेण
॥७॥ अग्नेऽअङ्गिरः । शतन्तेसन्त्वावृतःसहस्रन्तऽउपावृतः ॥

अधापोषंस्यपोषेणपुनंर्नोनष्टमाकृधिपुनंर्नोरयिमाकृधि ॥ ८ ॥ पुनं
रूर्जा । निवंर्त्तस्वपुनंरग्नऽइषायुषा ॥ पुनंर्नः पाह्यᳫंहंसः ॥ ९ ॥ स
हर्‌य्या । निवंर्त्तस्वाग्नेपिन्वंस्वधारंया ॥ विश्वप्प्स्न्यांविश्वतस्परि
॥ १० ॥ आत्त्वा । हार्षमन्तरंभूर्द्धुवस्तिष्ठाविंचाचलिः ॥ विशंस्त्वास
र्वावाञ्छन्तुमात्वद्राष्ट्रमधिंभ्रशत् ॥ ११ ॥ उदुत्तमम् ॥ उदुंत्तमंव्वं
रुणपाशंमस्म्मदवाधमंविमंध्यमᳫंश्रंथाय ॥ अथांवयमांदित्यव्रते
तवानांगसोऽअदितयेस्याम ॥ १२ ॥ अग्ग्रेबृहन् ॥ अग्ग्रेबृहन्नुषसांमू

द्यौऽअंस्त्थान्निर्ज्जगृर्व्वान्तमंसोज्ज्योतिषागांत् ॥ अग्निर्भानुनारुशं
तास्वङ्गऽआजातोविश्वासद्मान्यप्प्राः ॥१३॥ हुठसश्शुंचिषत् ॥ हुठ
सश्शुंचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिंथिर्दुरोणसत् ॥ नृषद्वरसद्द
तसद्व्योमसदब्जागोजाऽऋतजाऽअंद्रिजाऽऋतंबृहत् ॥ १४ ॥
सीदत्त्वम् ॥ सीदत्त्वम्मातुरस्याऽउपस्त्थेविश्वान्यग्नेवयुनानिवि
द्वान् ॥ मैनान्तपसामार्चिषाभिशोचीरन्तरस्याᳬं शुक्रज्ज्योतिर्वि
भाहि ॥१५॥ अन्तरग्ने । रुचात्त्वमुखायाऽंसदनेस्वे ॥ तस्यास्त्वᳬं

हरसातपञ्जातवेदःशिवोभव॥१६॥ शिवोभुत्त्वा। मह्यमग्नेअथोसी
दशिवस्त्वम् ॥ शिवाःकृत्त्वादिशःसर्वाःस्वंयोनिमिहासदः॥१७॥
[१७] दिवस्परि । प्रथमञ्जज्ञेऽअग्निरस्मद्द्वितीयम्परिजातवे
दाः ॥ तृतीयमप्सुनृमणाऽअजस्रमिन्धानऽएनञ्जरतेस्वाधीः
॥ १८ ॥ विद्माते । अग्नेत्रेधात्त्रयाणिविद्मातेधामविभृतापुरुत्रा ॥
विद्मातेनामपरमङ्गुहायद्विद्मातमुत्संयतऽआजगन्थ ॥१९॥ समु
द्रेत्त्वा । नृमणाऽअप्स्वन्तर्नृचक्षाईधेदिवोअग्नऊधन् ॥ तृतीये

त्वारजांसितस्त्थवाऽंसंमपामुपस्त्थेमहिषाऽअवर्द्धन् ॥२०॥ अक्रन्ददग्निः ॥ अक्रन्ददग्निस्त्तनयन्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥२१॥ श्रीणामुदारः ॥ श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रार्पणःसोमगोपाः ॥ वसुःसूनुःसहसोऽअप्सुराजाविभात्यग्रऽउषसामिधानः ॥२२॥ विश्वस्यकेतुः ॥ विश्वस्यकेतुर्भुवनस्यगर्भऽआरोदसीऽअपृणाज्जायमानः ॥ वीडुञ्चिदद्रिमभिनत्परायञ्जनाय

दुग्निमयंजन्तपञ्च॥२३॥उशिक्पावकः॥उशिक्पावकोऽअरतिःसु
मेधामर्तेष्वग्निरमृतोनिधायि॥ इयर्तिधूममरुषम्भरिभ्रदुच्छुक्रे
णशोचिषाद्यामिनक्षन्॥ २४ ॥ दृशानोरुक्मः॥दृशानोरुक्मऽउ
र्व्याव्यद्यौदुर्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयो
भिर्यदेनन्द्यौरजनयत्सुरेताः॥ २५ ॥ यस्ते । अद्यकृणवद्भद्रशोचे
पूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्रतरंवस्योऽअच्छाभिसुम्नन्देवभ
क्तंयविष्ठ॥ २६ ॥ आतम् ॥ आतम्भजसौश्रवसेष्वग्नऽउक्थऽउ

॥ १४ ।

क्थ्ऽआभंजशस्यमाने ॥ प्प्रियश्सूर्य्यें प्प्रियोअग्नाभंवात्त्युज्जातेन
भिनदुदुज्जनित्त्वैः ॥ २७ ॥ त्त्वामंग्ने ॥ त्त्वामंग्नेयजमानाऽअनु
द्यून्विश्वावसुदधिरेव्वाय्यीणि ॥ त्त्वयासहद्द्रविणमिच्छमानाव्व्रज
ङ्गोमंन्तमुशिजोव्विवब्रुः ॥२८॥अस्ताव्यग्निश॥अस्ताव्यग्निर्न्नरा०ं
सुशेवोवैश्वानरऽऋषिभिःसोमगोपाः ॥ अद्वेषेद्यावापृथिवीहुवेम
देवाधत्तरयिमस्म्मेसुवीरम् ॥ २९ ॥[१२] समिधाग्निम् ॥ समिधा
ग्निन्दुवस्यतघृतैर्बोधयतातिथिम्॥आस्मिन्हव्याजुहोतन॥३०॥

उदुत्त्वा ॥ उदुत्त्वाविश्वेदेवाऽअग्नेभरन्तुचित्तिभिः ॥ सनोभवशि
वस्त्वꣳसुप्रतीकोविभावसुः ॥ ३१ ॥ प्रेत ॥ प्रेदग्नेज्ज्योतिष्म्यान्या
हिशिवेभिरर्चिभिष्ट्वम् ॥ बृहद्भिर्भानुभिर्भासन्माहिꣳसीस्तन्वा
प्रजाः ॥ ३२ ॥ अक्रन्ददग्निः ॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षा
मारेरिहद्वीरुधः समञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअख्यदारो
दसीभानुनाभात्यन्तः ॥ ३३ ॥ प्रप्रायम् ॥ प्रप्रायमग्निर्भरतस्य
शृण्वेवियत्सूर्योनरोचतेबृहद्भाः ॥ अभियःपूरुम्पृतनासुतस्थौदी

दायदैव्व्योऽअतिथिःशिवोनः ॥ ३४ ॥ आपोदेवीः ॥ आपोदेवीःप्प्र
तिगृब्भ्णीतभस्स्मैतत्स्योनेकृणुध्वःसुरभाऽउलोके ॥ तस्स्मैनमन्ता
ञ्जनयःसुपत्क्वीम्मातेवपुत्त्रम्बिभृताप्प्स्वेनत् ॥ ३५ ॥ अप्प्स्वग्ग्ने ॥
अप्प्स्वग्ग्नेसधिष्टवसौषधीरनुरुध्यसे ॥ गब्भेंसञ्जायसेपुनः ॥ ३६ ॥
गब्भोऽअसि ॥ गब्भोअस्योषधीनाङ्गब्भोवनस्प्पतीनाम् ॥ गब्भो
विश्वस्यभूतस्याग्ग्नेगब्भोऽअपामसि ॥३७॥ प्रसद्यभस्स्मना ॥ प्र
सद्यभस्स्मनायोनिमपश्चपृथिवीमग्ग्ने ॥ सःसृज्ज्यमातृभिष्ट्वञ्ज्यो

तिंष्मान्पुनरासंदः॥३८॥ पुनेरासद्यं । पुनेरासद्यसदनमुपश्चपृथि
वीमंग्ने ॥ शेषैमातुर्य्यथोपस्थेनन्तरैस्याछंशिवतमः ॥ ३९ ॥ पुन
रूर्ज्जा । निवर्त्तस्वपुनंरग्नऽइषायुंषा ॥ पुनर्न्नःपाहयःहंसः ॥ ४० ॥
सहरय्या । निवर्त्तस्वाग्नेपिन्वंस्वधारया ॥ विश्वप्प्स्न्याविश्वतस्प्प
रिं ॥ ४१ ॥ बोधामे । ऽअस्यवर्चसोयाविष्ठमःहिष्ठस्यप्रभृतस्यस्वधा
वः ॥ पीयंतित्त्वोऽअनुत्त्वोगृणातिवन्दारुष्टेतन्वंवन्देऽअग्ने ॥४२॥
सबोधि । सूरिर्म्मघवावसुंपतेवसुदावन् ॥ युयोद्ध्यस्म्मद्द्वेषांछंसिवि

श्च्यकर्म्मणेस्वाहा ॥ ४३ ॥ पुनंस्त्वा । दित्याऽरुद्द्रावसंवुꣳसमिन्धता
म्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तुन्वंवर्द्धयस्वसुत्त्याःसंन्तुय
जमानस्युकामाः ॥ ४४ ॥ [ १५ ] अपेत ॥ अपेतवीतविचसर्प्पतातोये
त्रस्त्थपुराणायेचुनूतनाः ॥ अदाद्यमोवसानंम्पृथिव्याऽअक्रन्निम
म्पितरोलोकमस्म्मै ॥ ४५ ॥ सञ्ज्ञानमसि । कामधरणम्मयिंतेकाम
धरणम्भूयात् ॥ अग्ग्नेर्ब्भस्म्मास्यग्ग्नेःपुरीषमसिचितस्त्थपरिचित
ऽऊर्द्धचितःश्रयद्ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्ग्निर्यं

स्मिन्त्सोममिन्द्रः सुतन्दधेजठरेवावशानः ॥ सहस्रियम्वाजम
त्त्यन्नसप्तिꣳ ससवान्त्सन्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥ अ
ग्नेयत्तेदिविवर्च्चः पृथिव्यांय्यदोषधीष्ष्वप्स्वायजत्र ॥ येनान्तरि
क्षमुर्व्वाततन्थत्त्वेषः सभानुरर्णवोनृचक्षाः ॥ ४८ ॥ अग्नेदिवः ॥ अ
ग्नेदिवोऽअर्णमच्छादिगास्यच्छादेवाँ२ ऽऊचिषेधिष्ण्याये ॥ यारो
चनेपरस्तात्सूर्य्यस्ययाश्चावस्तादुपतिष्ठन्तऽआपः ॥ ४९ ॥ पुरी
ष्ष्यासोऽअग्नयः । प्रावणेभिः सजोषसः ॥ जुषन्तांय्यज्ञमद्रुहो

नमीवाऽइषोंमुहीः ॥ ५० ॥ इडांमग्ने । पुरुद८ंसं८ंसुनिङ्गोःशंश्वत्त
म८ंहवंमानायसाध ॥ स्यान्नःसूनुस्तनंयोविजावाग्नेसातेंसुमति
र्भूत्त्वस्मे ॥ ५१ ॥ अयन्तें ॥ अयन्तेयोनिर्ऋत्त्वियोयतोंजातोऽअ
रोंचथाः ॥ तञ्जानन्नग्नऽआरोहाथांनोवर्द्धयारयिम् ॥ ५२ ॥ चिदंसि ॥
चिदंसितयादेवतंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसितयादेवतंयाङ्गिर
स्वद्ध्रुवासींद ॥ ५३ ॥ लोकम्पृण । च्छिद्रम्पृणाथोंसीदद्ध्रुवात्त्वम् ॥
इन्द्राग्नीत्त्वाबृहस्प्पतिरस्मिन्न्योनांवसीषदन् ॥ ५४ ॥ ताऽअंस्य ।

सूदेदोहसꣳसोमꣳश्रीणन्तिपृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्वा
रोचनेदिवः ॥ ५५ ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र
व्यचसङ्गिरः ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ ५६ ॥
समितम् ॥ समितꣳसङ्कल्पेथाꣳसम्प्रियौरोचिष्णूसुमनस्यमानौ ॥
इषमूर्जमभिसंवसानौ ॥ ५७ ॥ संवाम् ॥ संवाम्मनाꣳसिसंव्रतास
मुचित्तान्याकरम् ॥ अग्नेपुरीष्याधिपाभवत्त्वन्नऽइषमूर्जंयज
मानायधेहि ॥ ५८ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वम्पुरीष्योरयिमान्पुष्टि

माँ२ऽअंसि ॥ शिवाश्कृत्त्वादिशः॑सर्व्वाः॑स्वंय्योनिमिहासदः॑॥५९॥
भवंतन्नः॑ ॥ भवंतन्नः॑समनसौसचेतसावरेपसौ ॥ मायज्ञᳪ॑हिᳪ॑सिष्ट
म्मायज्ञपतिज्ज्ञातवेदसौशिवौभवतमद्यनः॑ ॥ ६० ॥ मातेवपुत्रम् ॥
मातेवपुत्रम्पृथिवीपुरीष्ष्यमग्निᳪ॑स्वेयोनावभारुषा ॥ तांविश्श्वैर्द्देवै
र्ऋतुभिः॑संविदानश्प्रजापतिर्व्विश्श्वकर्म्माविमुञ्चतु ॥६१॥[७]असु
न्न्वन्तमयजमानम् ॥ असुन्न्वन्तमयजमानमिच्छस्तेनस्येत्यामन्न्वि
हितस्करस्य ॥ अन्न्यमस्म्मदिच्छसातऽइत्त्यानमोदेविनिर्ऋतेतु

ऽभ्यमस्तु॥६२॥ नमःसुतेनिर्ऋतेतिग्मतेजोयस्म्मयंविचृताबन्धमे
तम् ॥ यमेनत्त्वंय्यम्म्यासंविदानोत्तमेनाकेऽअधिरोहयैनम् ॥६३॥
यस्यास्ते। घोरऽआसञ्जुहोम्म्येषाम्बन्धानामवसर्ज्जनाय ॥ यान्त्वा
जनोभूमिरितिप्प्रमदन्तेनिर्ऋतिन्त्वाहम्परिवेदविश्श्वतः ॥ ६४ ॥
यन्तेदेवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्त्यम् ॥ तन्तेविष्ष्या
म्म्यायुषोनमद्ध्यादथैतम्पितुमद्धिप्प्रसूतः ॥ नमोभूत्त्यैयेदञ्चकार
॥ ६५ ॥ निवेशनःसङ्गमनः ॥ निवेशनःसङ्गमनोवसूनांविश्श्वारूपा

भिचंष्टेशचीभिः ॥ देवऽइवसविता सत्त्यधर्म्मैन्द्रोनतस्त्थौसमरेपथीनाम् ॥ ६६ ॥ सीरायुञ्जन्ति । कवयोयुगाव्वितन्वतेपृथक् ॥ धीरांदेवेषुसुम्नया ॥ ६७ ॥ युनक्तसीरा ॥ युनक्तसीराव्वियुगातनुध्वङ्कृते योनौव्वपतेहबीजम् ॥ गिराचंश्श्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्य÷पक्कमेयात् ॥ ६८ ॥ शुनᳪसु । फालाविकृषन्तुभूमिᳪशुनङ्कीनाशाऽअभियन्तुवाहैः ॥ शुनासीराहविषातोशमानासुपिप्पलाऽओषधीःकर्त्तनास्म्मे ॥ ६९ ॥ घृतेनसीता ॥ घृतेनसीतामधुनासमं

विना ॥ साकंवातंस्यङ्क्षाज्ज्यांसाकन्नंश्यनिहाकंया ॥ ८७॥ अन्न्या
वं÷ ॥ अन्न्यावोऽअन्न्यामंवत्त्वन्न्यान्न्यस्याऽउपांवत ॥ ताःसर्व्वाःसंवि
दानाऽइदम्मेप्प्रावंतावचं÷ ॥ ८८ ॥ याःफलिनीः ॥ याःफलिनी
र्व्याऽअंफलाऽअंपुष्पायाश्चंपुष्पिणीः ॥ बृहस्प्पतिंप्प्रसूतास्तानो
मुञ्चन्त्वꣳहंसः ॥ ८९ ॥ मुञ्चन्तुंमा । शपत्थ्यादथोंव्वरुण्यादुत ॥ अ
थोंयमस्यपड्वीशात्सर्व्वस्म्माद्देवकिल्बिषात् ॥ ९० ॥ अवपतन्तीरव
दन् ॥ अवपतन्तीरवदन्दिवऽओषधयस्प्परिं ॥ यञ्जीविमश्नवांमहै

नसरिष्ष्याति पूरुषः ॥ ९१ ॥ याऽओषधीः ॥ याऽओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ॥ तासामसित्त्वमुत्तमारङ्कामायशᳬहृदे ॥ ९२ ॥ याऽओषधीः ॥ याऽओषधीः सोमराज्ञीर्विष्ष्ठिताः पृथिवीमनु ॥ बृहस्पतिप्प्रसूताऽअस्यैसन्दत्तवीर्य्यम् ॥ ९३ ॥ याश्चे ॥ याश्चेदमुपशृण्वन्ति याश्चदूरम्परागताः ॥ सर्वाः सङ्गत्यवीरुधोस्यैसन्दत्तवीर्य्यम् ॥ ९४ ॥ मावः ॥ मावोरिषत्खनितायस्मैचाहङ्खनामिवः ॥ द्विपाच्चतुष्ष्पादस्म्माकᳬसर्वमस्त्वनातुरम् ॥ ९५ ॥ ओषधयः

सम् ॥ ओषधयुःसमवदन्तसोमेनसुहराज्ञा ॥ यस्मैकृणोतिब्राह्मु
णस्तꣳराजन्पारयामसि ॥ ९६ ॥ नाशयित्रीबलासुस्यार्शसऽउपचि
तांमसि ॥ अथोशुतस्युयक्ष्मांणाम्पाकारोरसिनाशनी ॥ ९७ ॥ त्वाङ्ग
न्धुर्वाः ॥ त्वाङ्गन्धुर्वाऽअंखनुस्त्वामिन्द्रुस्त्वाम्बृहुस्पतिः ॥ त्वा
मोषधेसोमुराजाविद्वान्यक्ष्मादमुच्यत ॥ ९८ ॥ सहस्वमे ॥ सहस्व
मेऽअरातीःसहस्वपृतनायुतः ॥ सहस्वुसर्व्वंपाप्मानꣳसहमानास्योष
धे ॥ ९९ ॥ दीर्घायुस्ते ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्त्वाख

नीम्म्यहम् ॥ अथोत्त्वन्दीर्ग्घायुर्भूत्त्वाशतवल्शाविरोहतात्
॥ १०० ॥ त्वसुत्तमा। स्योषधेतववृक्षाऽउपस्तयः ॥ उपस्तिरस्तुसो
स्म्माकंय्योऽअस्म्माँ२ऽअभिदासति ॥ १०१ ॥ [२७] मामाहिᳬ
सीज्जनितायःपृथिव्यायोवादिवᳬसत्यधर्म्माव्यानट् ॥ यश्चापश्च
न्द्राःप्प्रथमोजजानकस्म्मैदेवायहविषाविधेम ॥ १०२ ॥ अब्भ्या
वर्त्तस्व । पृथिवियज्ञेनपयसासह ॥ वपान्तेऽअग्निरिषितोऽअरो
हत् ॥ १०३ ॥ अग्नेयत् ॥ अग्नेयत्तेशुक्रंय्यच्चन्द्रंय्यत्पूतंय्यच्चय

ज्ज्रियम् ॥ तद्देवेभ्योभरामसि ॥ १०४ ॥ इषमूर्ज्जम् ॥ इषमूर्ज्जमह
मितऽआदमृतस्ययोनिम्महिषस्यधाराम् ॥ आमागोषुविशत्वातनू
षुजहामिसेदिमानिरामममीवाम् ॥ १०५ ॥ अग्नेतव ॥ अग्नेतवश्र
वोवयोमहिभ्राजन्तेऽअर्च्चयोविभावसो ॥ बृहद्भानोशवसावाज
मुक्थ्यन्दधासिदाशुषेकवे ॥ १०६ ॥ पावकवर्च्चाःशुक्रवर्च्चाः ॥ पाव
कवर्च्चाःशुक्रवर्च्चाऽअनूनवर्च्चाऽउदियर्षिभानुना ॥ पुत्रोमातराविं
चरन्नुपावासिपृणाक्षिरोदसीऽउभे ॥ १०७ ॥ ऊर्ज्जोनपात् ॥ ऊर्ज्जोन

पाज्जातवेदꣳसुशस्तिभिर्म्मन्दस्वधीतिभिर्हितः ॥ त्वेऽइषꣳसन्दधु
र्भूरिवर्प्पसश्चित्रोतयोवामजाताः ॥ १०८ ॥ इरज्ज्यन्नग्ने । प्प्रथय
स्वजन्तुभिरस्म्मेरायोऽअमर्त्त्य ॥ सदर्शतस्यवपुषोविराजसिपृण
क्षिसानसिक्क्रतुम् ॥ १०९ ॥ इष्क्कर्त्तारमद्ध्वरस्य ॥ इष्कर्त्तारमद्ध्वरस्य
प्प्रचेतसङ्क्षयन्तꣳराधसोमहः ॥ रातिवामस्यसुभगाम्महीमिषन्द
धासिसानसिꣳरयिम् ॥ ११० ॥ ऋतावानम्महिषं । विश्वदर्शतम
ग्निꣳसुम्नायदधिरेपुरोजनाः ॥ श्रुत्कर्णꣳसप्प्रथस्तमन्त्वागिरादै

व्युम्मानुंषायुगा ॥ १११ ॥ आप्प्यांयस्व । समेंतुतेव्विश्श्वतं÷सोमव्वृ
ष्ण्ण्यंम् ॥ भवाव्वाजंस्यसङ्गथे ॥ ११२ ॥ सन्तें ॥ सन्तेपयांᳫसिसमु
यन्तुव्वाजाᳫसंव्वृष्ण्ण्यांन्यभिमातिषाहं÷ ॥ आप्प्यायंमानोऽअमृ
तांयसोमदिविश्श्रवांᳫस्युत्तमानिंधिष्ष्व ॥ ११३ ॥ आप्प्यांयस्व ॥
मदिन्तमसोमव्विश्श्वेंभिरᳫशुभिं÷ ॥ भवांनᳫसप्प्रथंस्तमᳫसखांव्वृधे
॥ ११४ ॥ आतें । व्वत्सोमनोंयमत्परमाच्चिंत्सधस्त्थात् ॥ अग्ग्नेत्त्वां
ङ्कांमयागिरा ॥ ११५ ॥ तुब्भ्यन्ताः ॥ तुब्भ्यन्ताऽअंङ्गिरस्तमव्वि

श्वांᳪ सुक्षितयᳪ पृथक् ॥ अग्नेकामाययेमिरे ॥ ११६ ॥ अग्निᳪ प्प्रिये
षुं ॥ अग्निᳪ प्प्रियेषुधामसुकामोभूतस्यभव्व्यस्य सम्म्राडेकोव्विराजति
॥ ११७ ॥ [१६] इतिश्रीवाजसनेयसंहितायांद्वादशोऽध्यायः
॥ १२ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ मयिगृह्णामिपंचद
शध्रुवासिमधुव्वाताएकादशकौसम्यक्स्रवंतिनवेमंमाषडपांत्वैका
ऽयंपुरःपंचसप्ताष्टापंचाशत् ॥ मयिगृह्णामि ॥ मयिगृह्णाम्म्यग्ग्रेऽअ
ग्निᳪ रायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥ मामुदेवताऽसच

न्ताम् ॥ १ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमसियोनिरग्नेःसमुद्रमभि
तऽपिन्वमानम् ॥ वर्द्धमानोमहाँ२ऽआचपुष्करेदिवोमात्रयाव्वरि
म्णाप्प्रथस्व ॥ २ ॥ ब्रह्मयज्ञानम् ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ता
द्विसीमतःसुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसत
श्चयोनिमसतश्चव्विवः ॥ ३ ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजा
तःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायह
विषाविधेम ॥ ४ ॥ द्रप्सश्चस्कन्द । पृथिवीमनुद्यामिमञ्चयोनिमनु

यश्चपूर्व्वं÷ ॥ समानंस्योनिमनुसञ्चरंन्तन्द्रप्प्सञ्जुहोम्म्यनुंसप्तहो
त्राऽ ॥५॥ नमोस्तु । सर्प्पेभ्यो येकेचपृथिवीमनु ॥ येऽअन्तरिक्षे
येदिवितेभ्यं÷सर्प्पेभ्योनमं÷ ॥ ६ ॥ याऽइषवं ॥ याऽइषवोयातु
धानानांय्येवावनस्प्पती १ रनु ॥ येवांवटेषुशेरंतेतेभ्यं÷सर्प्पे
भ्योनमं÷ ॥ ७ ॥ येवा । मीरोचनेदिवोयेवासूर्य्यस्यरश्मिषु ॥ ये
षामप्प्सुसदंस्कृतन्तेभ्यं÷सर्प्पेभ्योनमं÷ ॥८॥ कृणुष्वपाजं÷ ॥
कृणुष्वपाजंप्प्रसितिन्नपृथ्वींय्याहिराजेवामंवाँ २ ऽइभेन ॥ तृ

ष्ठ्वीमनुप्प्रसितिन्द्रूणानोऽस्तासिविध्यरक्षसुस्तपिष्ठैः॥९॥ तवंभ्रमा

सं॑॥तवंभ्रमासऽआशुयापंतन्त्यनुंस्पृश धृषताशोशुचानः॥तपूꣳ

ष्यग्ने जुह्वापतुङ्गानसन्दितोविसृंजविष्वंगुल्काः ॥ १० ॥ प्रति

स्प्पशो॑ ॥ प्रतिस्प्पशोविसृंजतूर्णितमोभवापायुर्विशोऽअस्याऽअ

दंब्धः ॥ योनोदूरेऽअघशꣳसोयोऽअन्त्यग्नेमाकिंष्टेव्यथिरादधर्षी

त् ॥ ११ ॥ उदग्ने। तिष्ठप्प्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्गम

हेते ॥ योनोऽअरातिꣳसमिधानचक्रेनीचातन्धक्ष्यतसन्नशुष्कम्

॥१२॥ऊर्द्ध्वोभंव॥ऊर्द्ध्वोभंवप्प्रतिंविद्ध्याद्ध्यस्म्मदाविष्कृणुष्वदैव्यां
न्यग्ने॥ अवंस्थिरातंनुहियातुजूनांञ्जामिमजांमिम्प्रम्मृंणीहिशत्रू
न्॥ अग्नेष्ट्वातेजंसासादयामि॥ १३॥ अग्निर्म्मूर्द्धा । दिवःकुकुत्प
त्तिःपृथिव्याअयम्॥ अपाᳬरेतांᳬसिजिन्वति॥ इन्द्रंस्यत्त्वौज
सासादयामि॥ १४॥ भुवोयज्ञस्यं॥ भुवोयज्ञस्यरजंसश्चनेतायत्रां
नियुद्भिःसचंसेशिवाभिः॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामंग्ने
चकृषेहव्यवाहंम्॥ १५॥[१५] ध्रुवासिं। धरुणास्तृंताविश्वकंर्म्म

णा ॥ मात्त्वांसमुद्रऽउद्वधीन्मासुपण्णोंव्येथमानापृथिवीन्दृंᳫंह
॥ १६ ॥ प्रजापतिष्ट्वा सादयत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥ व्यचस्वतीम्प्र
थस्वतीम्प्रथस्वपृथिव्यासि ॥१७॥ भूरसि ॥ भूरसिभूमिरस्यदितिरसि
विश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवीँय्यच्छपृथिवीन्दृंᳫंहपृ
थिवीम्माहिᳫंसीः ॥१८॥ विश्वस्म्मैप्प्राणाय ॥ विश्वस्म्मैप्प्राणाया
पानायव्व्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ अग्निष्ट्वाभिपातुमह्या
स्वस्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥१९॥ का

ण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्प्परि ॥ एवानोदूर्व्वेप्प्रतनुसहस्रेणशतेनच ॥२०॥ याशतेन । प्प्रतनोषिसहस्रेणव्विरोहसि । तस्यास्तेदेवीष्टकेव्विधेमहविषाव्वयम् ॥२१॥ यास्ते । ऽअग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्व्वाभीरुचेजनायनस्कृधि॥२२॥ यावः॥यावोदेवाःसूर्य्येरुचोगोष्वश्वेषुयारुचः॥इन्द्राग्नीताभिःसर्व्वाभीरुचन्नोधत्तबृहस्प्पते ॥२३॥ व्विराड्ज्योतिः ॥ व्विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासादयतुपृ

ष्ठेपृथिव्याज्ज्योतिष्मतीम् ॥ विश्वस्मैप्प्राणायापानायव्यानाय
विश्वञ्ज्योतिर्य्यच्छ ॥ अग्निष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद
॥२४॥ मधुश्च॥मधुश्चमाधवश्चवासन्तिकावृतूऽअग्नेरन्तःश्लेषोसि
कल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्न
यःपृथङ्ममज्यैष्ठ्यायसव्रताः॥ येऽअग्नयःसमनसोन्तराद्यावापृ
थिवीऽइमे ॥ वासन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअ
भिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥२५॥ अषाढासि॥ अ

पांढासिसहंमानासहस्वरांतीःसहंस्वपृतनायतः ॥ सहस्रंवीर्य्यासि
सामांजिन्व ॥२६॥[११]मधुवाताः॥ मधुवाताऽऋतायतेमधुंक्षर
न्तिसिन्धंवः॥माध्वीर्न्नःसन्त्वोषंधीः॥२७॥मधुनक्तम्॥मधुनक्तमु
तोषसोमधुमत्पार्थिवंरजः ॥मधुद्यौरंस्तुनःपिता ॥२८॥ मधुमा
न्नः ॥ मधुमान्नोवनस्पतिर्म्मधुमाँ २ अस्तुसूर्य्यः ॥ माध्वीर्गावो
भवन्तुनः ॥ २९ ॥ अपाङ्गम्भंन् ॥ अपाङ्गम्भंन्त्सीदमात्वासूर्यो
भितांप्सीन्माग्निर्वैश्वानरः ॥ अच्छिन्नपत्राःप्रजाऽअंनुवीक्षस्वा

नुंत्त्वादिव्यावृष्टिःसचताम् ॥ ३० ॥ त्रीन्त्संमुद्रान् ॥ त्रीन्त्संमुद्रा
न्त्समसृपत्स्वर्ग्गानुपाम्पतिर्वृषभऽइष्टंकानाम् ॥ पुरीषंवसानःसुकृ
तस्यंलोकेतत्रगच्छयत्रपूर्वेपरेताः ॥ ३१ ॥ महीद्यौःपृथिवीचंनऽइ
मंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३२ ॥ विष्ण्णोःक
र्म्माणि । पश्यतयतोव्रतानिपस्पशे ॥ इन्द्रस्ययुज्ज्यःसखा ॥ ३३॥
ध्रुवासि ॥ धरुणेतोजज्ञेप्रथममेभ्योयोनिभ्योऽअधिजातवेदाः ॥
सगायत्र्यात्रिष्टुभानुष्टुभाचदेवेभ्योहव्यंवहतुप्रजानन् ॥ ३४ ॥

इषेरायेरमस्वसहंसेद्युम्नऽऊर्जेऽअपत्त्याय॥सम्म्राडसिस्वराडसि
सारस्वतौत्त्वोत्सौप्प्रावताम् ॥ ३५ ॥ अग्नेयुक्ष्व ॥ अग्नेयुक्ष्वाहि
येतवाश्वासोदेवसाधवः॥ अरंवहन्तिमन्न्यवे ॥३६॥युक्ष्वाहि ॥ देव
हूतेमाँ२ऽअश्वाँ२ऽअग्नेरथीरिंव॥निहोतापूर्व्व्यःसदः॥३७॥[११]
सम्म्यक्स्रवन्ति।सरितोनधेनाऽअन्तर्हृदामनसापूयमानाः॥ घृत
स्यधाराअभिचाकशीमिहिरण्ययोवेतसोमद्ध्येऽअग्नेः॥३८॥ रुचे
त्त्वा । रुचेत्त्वाभासेत्वाज्ज्योतिषेत्वा ॥ अभूदिदंविश्श्वस्यभुवनस्य

वाजिनमग्नेर्वैश्वानरस्यंच ॥३९॥अग्निर्ज्योतिषा॥अग्निर्ज्योतिषा
ज्योतिष्मान्रुक्मोवर्चसावर्चस्वान्॥ सहस्रदाऽअसिसहस्रायत्त्वा
॥४०॥ आदित्यङ्गर्भम् ॥ आदित्यङ्गर्भम्पयसासमङ्धिसहस्रस्यप्र
तिमांविश्वरूपम् ॥ परिवृङ्धिहरसामाभिमंस्थाःशतायुषङ्कृणुहि
चीयमानः ॥४१॥ वातस्यजूतिं । वरुणस्यनाभिमश्वञ्जज्ञानःसरि
रस्यमध्ये ॥ शिशुन्नदीनांहरिमद्रिबुध्नमग्नेमाहिंसीःपरमेव्यो
मन् ॥ ४२॥ अजस्रमिन्दुम् ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमी

डेपूर्व्वंचित्तिन्नमोभिः ॥ सपर्व्वभिर्ऋतुशःकल्प्पमानोगाम्माहिंᳫसीः
रदितिंविराजम् ॥ ४३ ॥ वरूत्रीन्त्वष्टुः ॥ वरूत्रीन्त्वष्टुर्वरुणस्यना
भिमविंञ्जज्ञानाᳫंरजसःपरस्म्मात् ॥ महीᳫंसाहस्रीमसुरस्यमा
यामग्नेमाहिंᳫसीःपरमेव्योमन् ॥ ४४ ॥ योऽअग्निः ॥ योऽअग्नि
रग्नेरध्यजायतशोकात्पृथिव्याऽउतवादिवस्प्परि ॥ येनप्प्रजाविश्व
कर्म्माजजानतमग्नेहेडःपरितेवृणक्तु ॥४५॥ चित्रन्देवानाम् ॥ चित्र
न्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः ॥ आप्प्राद्यावा

देयमुप्स्वायुरपोदत्तोदुधिम्भिन्त ॥ दिवस्प्पुर्ज्जन्यादुन्तरिक्षात्पृथि
व्यास्ततोनोवृष्ट्यांव ॥ ५५ ॥ इष्टोयुज्ञः ॥ इष्टोयुज्ञोभृगुराशीर्द्दावं
सुभिः ॥ तस्यनऽइष्टस्यंप्प्रीतस्यद्रविणेहागमेः ॥ ५६ ॥ इष्टोऽअ
ग्निः ॥ इष्टोऽअग्निराहुतःपिपर्त्तुनऽइष्टछ्हुविः ॥ स्वगेदन्देवेब्भ्यो
नमः ॥५७॥ [ ७ ] यदाकूतात् ॥ यदाकूतात्समसुस्रोद्धृदोवाम
नसोवासम्भृतञ्चक्षुषोवा ॥ तदनुप्प्रेतसुकृतामुलोकंयत्र्रऽऋषयोज
ग्मुःप्प्रथमजाःपुराणाः ॥ ५८ ॥ एतछसंधस्थंपरितेददामियमाव

हाच्छेवधिञ्ज्ञातवेदाः॥ अन्वागन्तायज्ञपतिर्वोऽअत्रतᳪस्म्मंजानी
तपरमेव्योमन् ॥ ५९ ॥ एतञ्ज्ञानाथ । परमेव्योमन्देवाःसधस्त्था
विदरूपमस्य ॥ यदागच्छात्पथिभिर्द्देवयानैरिष्टापूर्तेकृणवाथाविरं
स्म्मै ॥ ६० ॥ उद्बुध्यस्व ॥ उद्बुध्यस्वाग्ग्ने प्रतिजागृहित्वमिष्टापूर्तेसᳪ
सृजेथामयञ्च ॥ अस्म्मिन्त्सधस्थेऽअद्ध्युत्तरस्म्मिन्विश्वेदेवायजमा
नश्चसीदत ॥ ६१ ॥ येनवहसि । सहस्रंयेनाग्नेसर्व्ववेदसम् ॥ तेनेमं
यज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ६२ ॥ प्रस्तरेणपरिधिना । स्रुचावेद्या

चर्वर्हिषा ॥ ऋचेमंय्यज्ञन्नोनयस्वर्हैवेषुगन्तवे ॥ ६२ ॥ यद्दत्तम् ॥
यद्दत्तंय्यत्पंरादानंय्यत्पूर्तंय्याश्श्चदाक्षिणाः ॥ तदग्निर्वैश्श्वकर्म्मणः
स्वर्हैवेषुंनोदधत् ॥ ६३ ॥ यत्रधाराः ॥ यत्रधाराऽअनंपेतामधोर्घृ
तस्यंचयाः ॥ तदग्निर्वैश्श्वकर्म्मणःस्वर्हैवेषुंनोदधत् ॥ ६५ ॥ अग्निरं
स्स्मि ॥ ७ ॥ स्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतंम्मऽआसन् ॥
अर्कस्त्रिधातृतन्त्रक्षाविमानोजंस्रोघर्म्मोहविरंस्स्मिनाम ॥ ६६ ॥ ऋचो
नाम ॥ ऋचोनामास्स्मियजूंषिनामास्स्मिसामानिनामास्स्मि ॥

येऽअग्नयः पाञ्चजन्या ऽअस्याम्पृथिव्यामधि ॥ तेषामसि त्वमुत्त मः प्रनो जीवातवे सुव ॥ ६७ ॥ [ १० ] वार्त्रहत्याय शवसे पृतनाषा ह्याय च ॥ इन्द्र त्वा वर्त्तयामसि ॥ ६८ ॥ सहदानुम्पुरुहूत । क्षियन्त महस्तमिन्द्र सम्पिणक्कुणारुम् ॥ अभि वृत्रं वर्द्धमानम्पियारुमपाद मिन्द्र तवसा जघन्थ ॥ ६९ ॥ विनः ॥ विनऽइन्द्र मृधो जहि नीचा य च्छ पृतन्यतः ॥ योऽअस्माँ२ऽअभिदासत्यधरङ्गमया तमः ॥ ७० ॥ मृगो न । भीमः कुचरो गिरिष्ठाः परावतऽआजगन्था परस्याः ॥ सृकꣳ

सहुस्रायंपविमिन्द्रतिग्ग्मंविशत्रून्ताढ्विम्मृधोनुदस्व ॥ ७१ ॥ व्वैश्वा
नरोनं÷ ॥ व्वैश्वानरोनऽऊतयऽआप्प्रयांतुपरावतं÷ ॥ अुग्निर्नं÷सुष्टु
तीरुपं ॥ ७२ ॥ पृष्टोदिवि ॥ पृष्टोऽअुग्निःपृथिव्यांपृष्टोविश्वाऽओष
धीराविवेश ॥ व्वैश्वानरःसहसापृष्टोऽअग्निःसनोदिवासरिषस्पातु
नक्तम् ॥ ७३ ॥ अश्यामतम् ॥ अश्यामतङ्कामंमग्नेतवोतीऽअश्या
मंरयिꣳरयिवःसुवीरंम् ॥ अश्यामव्वाजमभिवाजयंन्ताश्यामंद्यु
म्नमंजराजरंन्ते ॥ ७४ ॥ व्वयन्ते । ऽअद्यररिमाहिकामंमुत्तानह

शसोमोराजाष्टौसीसेनतंत्र६षोडशसप्तपंचनवतिः ॥ हरिःॐ स्वा
द्वीन्त्वा । स्वादुनातीव्रान्तीव्रेणामृताममृतेन ॥ मधुमतीम्मधुम
तासृजामिस६सोमेन ॥ सोमोस्यश्विभ्यांम्पच्यस्वसरस्वत्यैपच्य
स्वेन्द्रायसुत्राम्णेपच्यस्व ॥ १ ॥ परीतः ॥ परितोषिञ्चतासुत६सो
मोयऽउत्तम६हविः ॥ दधन्वायोनर्योऽअप्स्वन्तरासुषावसोमम
द्रिभिः ॥ २ ॥ वायोःपूतः । पवित्रेणप्रत्यङ्सोमोऽअतिद्रुतः ॥
इन्द्रस्ययुज्यःसखा ॥ वायोःपूतःपवित्रेणप्राङ्सोमोऽअतिद्रुतः ॥

इन्द्रस्ययुज्यꣳसखा ॥ ३ ॥ पुनातिते । परिस्रुतꣳसोमꣳसूर्यस्यदु
हिता ॥ वारेणशश्वतातना ॥ ४ ॥ ब्रह्मक्षत्रम् ॥ ब्रह्मक्षत्रम्पवते
तेजऽइन्द्रियꣳसुरयासोमः सुतऽआसुतोमदाय ॥ शुक्रेणदेवदेव
ताःपिपृग्धिरसेनान्नंयजमानायधेहि ॥ ५ ॥ कुविदङ्ग । यवमन्तो
यवञ्चिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजनानियेबर्हि
षोनमउक्तिंयजन्ति ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यै
त्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिस्तेजसेत्त्वावीर्यायत्त्वाबलाय

त्त्वा ॥ ६ ॥ नानाहि । वान्देवहितःसदस्कृतम्सᳫर्सृक्षाथाम्परमेव्व्यो
मन् ॥ सुरात्वमसिंशुष्मिम्मणीसोमऽएषमामाहिᳫसीऽस्वांव्योनिं
माविशन्ती ॥ ७ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याश्वि
नंतेजः सारस्वतंवीर्य्यमैन्द्रम्बलम् ॥ एषतेयोनिम्मोदाय त्त्वानन्दा
यत्त्वामहसेत्त्वा ॥ ८ ॥ तेजोसि ॥ तेजोसितेजोमयिधेहिवीर्य्यम
सिवीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोस्योजोमयिधेहि
मन्न्युरसिमन्न्युम्मयिधेहिसहोसिसहोमयिधेहि ॥ ९ ॥ याव्व्याग्घ्रम् ॥

साव्याघ्रंविषूचिकोभौवृकञ्चरक्षति ॥ श्येनम्पतत्रिणᳬंसिᳬंहᳬंसे
मम्पात्वᳬंहसः॥ १० ॥ यदापिपेष ॥ मातरम्पुत्रः प्रमुदितोधयन् ॥
एतत्तदग्नेअनृणोभवाम्यहतौपितरौमया ॥ सम्पृचस्थसम्माभ
द्रेणपृङ्क्तविपृचस्थविमापाप्मनापृङ्क्त ॥ ११ ॥ [ ११ ] देवायज्ञम् ॥
देवायज्ञमतन्वतभेषजम्भिषजाश्विना ॥ वाचासरस्वतीभिषगिन्द्रा
येन्द्रियाणिदधतः ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपᳬंशष्पा
णिप्प्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपᳬंसोमस्यलाजाःसोमाᳫ

शवोमधु ॥ १३ ॥ आतिथ्यरूपम्मासरम् ॥ आतिथ्यरूपम्मास
रम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतत्तिस्रोरात्रीः सुरासुता
॥ १४ ॥ सोमस्यरूपम् ॥ सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते ॥
अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रᳪसरस्वत्या ॥ १५ ॥ आस
न्दीरूपम् ॥ आसन्दीरूपᳪराजासन्द्यैवेद्यैकुम्भीसुराधानी ॥ अन्त
रऽउत्तरवेद्यारूपङ्कारोत्तरोभिषक् ॥ १६ ॥ वेद्यावेदिः ॥ वेद्यावे
दिःसमाप्यतेबर्हिषाबर्हिरिन्द्रियम् ॥ यूपेनयूपऽआप्यतेप्रणीतो

ऽअग्निरश्विना ॥१७॥ हविर्द्धानं॑यत् ॥ हविर्द्धानं॑यदश्विनाग्नीध्रं॑

यत्सर॑स्वती ॥ इन्द्रा॑यैन्द्रꣳसद॑स्कृतम्पत्नीशालङ्गार्हपत्यः ॥१८॥

प्रैषेभि॑÷प्रैषान् ॥ प्रैषेभि॑÷प्रैषाना॑प्नोत्याप्रीभि॑राप्रीर्यज्ञस्य॑ ॥

प्रयाजेभि॑रनुयाजान्वषट्कारेभि॑राहुतीः ॥१९॥ पशुभि॑÷पशून् ॥

पशुभि॑÷पशूना॑प्नोतिपुरोडाशैर्हवी॑ꣳष्या ॥ छन्दो॑भिःसामिधेनी

र्याज्याभि॑र्वषट्कारान् ॥ २० ॥ धानाःकरम्भः॑सक्तवःपरीवापः

पयोदधि॑ ॥ सोम॑स्यरूपꣳहविष॑ऽआमिक्षावाजि॑नम्मधु॑ ॥ २१ ॥

धानानांᳫं रूपम् ॥ धानानांᳫं रूपङ्कुवलम्परीवापस्यंगोधूमाः ॥ सक्तूनांᳫं रूपम्बदरमुपवाकाः करम्भस्य ॥ २२ ॥ पयसो रूपम् ॥ पयसो रूपंयद्यवादुक्थो रूपङ्कर्कन्धूनि ॥ सोमस्य रूपंवाजिनᳫं सौम्यस्य रूपमामिक्षा ॥ २३ ॥ आश्रावय ॥ आश्रावयेतिस्तोत्रियाः प्रत्याश्रावोऽअनुरूपः ॥ यजेतिधाय्यारूपम्प्रगाथायेयजामहाः ॥ २४ ॥ अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानांᳫं रूपम्पदैराप्नोतिनिविदः ॥ प्रणवैःशस्त्राणांᳫं रूपम्पयसासोमऽआप्यते

॥२५॥ अश्विभ्याम्प्रातꣳसवनम् ॥ अश्विभ्याम्प्रातꣳसवनमिन्द्रे
णैन्द्रम्माध्यन्दिनम् ॥ वैश्वदेवꣳसरस्वत्यातृतीयमाप्तꣳसवनम्
॥ २६ ॥ वायव्यैर्वायव्यानि ॥ वायव्यैर्वायव्यान्याप्नोतिसतेनद्रो
णकलशम् ॥ कुम्भीभ्यामम्भृणौसुतेस्थालीभिःस्थालीराप्नोति
॥ २७ ॥ यजुर्भिराप्यन्तेग्रहाग्रहैस्तोमाश्चविष्टुतीः ॥ छन्दोभि
रुक्थाशस्त्राणिसाम्नावभृथऽआप्यते॥२८॥इडाभिर्भक्षान्॥इडा
भिर्भक्षानाप्नोतिसूक्तवाकेनाशिषः ॥ शंयुनापत्नीसंयाजान्त्स

मिष्ट्यजुषांसꣳस्याम् ॥ २९ ॥ व्रतेनंदीक्षाम् ॥ व्रतेनंदीक्षामांप्नोति
दीक्षयांप्नोतिदक्षिणाम् ॥ दक्षिणाश्श्रद्धामांप्नोतिश्श्रद्धयांसत्त्यमा
प्प्यते ॥३०॥ एतावद्रूपम् ॥ एतावद्रूपंय्यज्ञस्यषद्देवैर्ब्रह्मणाकृतम् ॥
तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसुते ॥३१॥[२०]सुरावन्तम्बर्हिष
दम् ॥ सुरावन्तम्बर्हिषदꣳसुवीरंय्यज्ञꣳहिन्वन्तिमहिषानमोभिः ॥
दधानाःसोमन्दिविदेवतासुमदेमेन्द्रंय्यजमानाःस्वर्काः ॥ ३२ ॥
यस्ते ॥ यस्तेरसःसम्भृतऽओषधीषुसोमस्यशुष्मःसुरयासुतस्य ॥ तेन

जिह्वयजमानम्मदेनसरस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥ यमश्विना । नमुचेरासुरादधिसरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तꣳशुक्रम्मधुमन्तमिन्दुꣳसोमꣳराजानमिहभक्षयामि ॥ ३४ ॥ यदत्र ॥
यदत्ररिप्तꣳरसिनꣳसुतस्ययदिन्द्रोऽअपिबच्छचीभिः ॥ अहन्तदस्यमनसाशिवेनसोमꣳराजानमिहभक्षयामि ॥ ३५ ॥ पितृभ्यः स्वधायिभ्यः । स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमी

मदन्तपितरोतीतृपन्तपितरꣳपितरꣳशुन्धेद्धम् ॥ ३६ ॥ पुनन्तु
मापितरꣳसोम्म्यासꣳपुनन्तुमापितामहाꣳपुनन्तुप्रपितामहाꣳ प
वित्रेणशतायुषा ॥ पुनन्तुमापितामहाꣳपुनन्तुप्रपितामहाꣳ ॥
पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥ अग्नऽआयूꣳषि ।
पवसऽआसुवोर्ज्जमिषञ्चनꣳ ॥ आरेबाधस्वदुच्छुनाम् ॥ ३८ ॥ पुन
न्तुमा । देवजनाꣳपुनन्तुमनसाधियꣳ । पुनन्तुविश्वाभूतानिजा
तवेदꣳपुनीहिमा ॥ ३९ ॥ पवित्रेणपुनीहि । माशुक्रेणदेवदीद्यत् ॥

अग्ने॒क्रत्वा॒क्रतूँ॒१ऽरनु॑॥४०॥ यत्ते॑प॒वित्र॑म॒र्चिष्यग्ने॒वित॑तम॒न्तरा॥
ब्रह्म॒तेन॑पुनातु॒मा॥ ४१ ॥ पव॑मान॒ꣳसः॥ पव॑मान॒ꣳसोऽअ॒द्यनः॑
प॒वित्रे॑ण॒विच॑र्षणि॒ꣳ॥ यः॒पोता॒सपु॑नातु॒मा॥ ४२॥ उ॒भाभ्या॑न्देव।
सवित॒ꣳप॒वित्रे॑ण॒स॒वेन॑च ॥ माम्पु॑नीहि॒वि॒श्वतः॑ ॥ ४३ ॥ वै॒श्व॒दे॒वी
पु॒न॒ती। दे॒व्याग॑ा॒द्यस्या॑मि॒माब॒ह्व्य॒स्त॒न्वो॒वी॒तपृ॑ष्ठाः॒ꣳ॥ तया॒मद॑न्त॒ꣳ
स॒ध॒मादे॑षु॒व॒यꣳस्या॑म॒पत॑यो॒रयी॒णाम्॥ ४४॥ येस॑मा॒नाः॒सम॑नस॒ꣳ
पि॒तरो॑य॒म॒राज्ये॑॥ तेषाँ॑ल्लो॒कः॒स्व॒धान॒मो॑य॒ज्ञोदे॒वेषु॑कल्पताम्॥४५

येसमानाः ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः ॥ तेषाᳬ

श्रीर्म्मयिकल्पतामस्मिँल्लोकेशतᳬसमाः ॥ ४६ ॥ द्वेसृती । ऽअ

शृणवम्पितृणामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमे

जत्समेतियदन्तरापितरम्मातरञ्च ॥ ४७ ॥ इदᳬहविः ॥ इदᳬह

विःप्रजननम्मेऽअस्तुदशवीरᳬसर्वगणᳬस्वस्तये ॥ आत्मसनिप्र

जासनिपशुसनिलोकसन्न्यभयसनि ॥ अग्निःप्रजाम्बहुलाम्मेक

रोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥४८॥ [१७] उदीरताम् ॥ उदी

रतामवंरऽउत्परांसऽउन्मंद्ध्यमाःपितरः सोम्म्यासः ॥ असुंय्यऽ
ईयुरंवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ ४९ ॥ अङ्गिरसोनः ।
पितरोनवंग्वाऽअथर्व्वाणोभृगवः सोम्म्यासः ॥ तेषांव्वयꣳसुमतौ
यज्ञियानामपिभद्रेसौमनसेस्याम ॥ ५० ॥ येनः ॥ येनःपूर्वेपित
रः सोम्म्यासोनूहिरेसोमपीथंव्वसिष्ठाः ॥ तेभिर्य्यमः सꣳरराणोह
वीꣳष्युशन्नुशद्भिः प्रतिकाममंत्तु ॥ ५१ ॥ त्वꣳसोम ॥ त्वꣳसो
मप्प्रचिकितोमनीषात्वꣳरजिष्ठमनुनेषिपन्थाम् ॥ तवप्प्रणीतीपि

तरौनऽइन्दोदेवेषुरत्कैमभजन्तधीरा॑ः ॥ ५२ ॥ त्वयाहि ॥ त्वया हिनं÷पितरं÷सोमपूर्वैकर्म्माणिचक्रुःपवमानधीरा॑ः ॥ वृन्वन्नवातः परिधीं १ ऽरपोर्णुवीरेभिरश्वैर्म्मघवाभवान॑ः ॥ ५३ ॥ त्वꣳसोम । पितृभिं÷संविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोहविषाविधेमवयꣳस्यामपतयोरयीणाम् ॥ ५४ ॥ बर्हिषद॑ःपितर॑ः ॥ बर्हिषद॑ःपितरऽऊत्यर्वागिमावोहव्याचकृमाजुषध्वम् ॥ तऽआगता वसाशन्तमेनाथान॑ःशंय्योररपोदधात ॥ ५५ ॥ आहम् ॥ आहम्पि

तृन्त्सुविदत्रौं २ऽअवित्सिनपातञ्चविक्क्रमणञ्चविष्ष्णोंः ॥ बुर्हिषदो
येस्वधयासुतस्यभजन्तापित्वस्तऽइहागमिष्ठाः ॥ ५६ ॥ उपहूताः
पितरं÷ । सोम्म्यासोबर्हिष्ष्येषुनिधिषुप्प्रियेषुं ॥ तऽआगमन्तुतऽइ
हश्श्रुवन्त्वधिब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५७॥ आयन्तु । नःपितरं÷
सोम्म्यासौग्निष्ष्वात्ताःपथिभिर्द्देवयानैः ॥ अस्म्मिन्यज्ञेस्वधयाम
दन्तोधिब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५८ ॥ अग्निष्ष्वात्ताःपितरः ॥
अग्निष्ष्वात्ताःपितरऽएहगच्छतसदं÷सदःसदतसुप्प्रणीतयः ॥ अ

त्ताहवींॳंषिप्प्रयंतानिबर्हिष्ष्यथांरयिॻ्ंसर्ववीरन्दधातन ॥ ५९ ॥
येऽअंग्निष्ष्वात्ताः ॥ येऽअंग्निष्ष्वात्तायेऽअनंग्निष्ष्वात्तामद्ध्येदि
वःस्वधयांमादयंन्ते ॥ तेब्भ्यंः स्वराडसुंनीतिमेतांय्यंथावशन्तन्त्व
ङ्कल्प्पयाति ॥ ६० ॥ अग्निष्ष्वात्तानृंतुमतंः ॥ अग्निष्ष्वात्तानृंतुम
तोंहवामहेनाराशंसेसोंमपीथंय्यंऽआशुः ॥ तेनोंविप्प्रांसःसुहवां
भवन्तुवयॳंस्यांमपतंयोरयीणाम् ॥ ६१ ॥ [ १३ ] आच्च्याजानु ।
दक्षिणतोनिपद्येमंय्यज्ञमभिगृणीतविश्वें ॥ माहिंॻ्ंसिष्टपितरःके

नोचित्रोयह्वऽआगः पुरुषताकराम ॥ ६२ ॥ आसीनासोऽअरुणी
नाम् ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषेमर्त्याय ॥ पुत्रे
भ्यः पितरस्तस्यवस्वःप्रयच्छततऽइहोर्जन्दधात ॥ ६३ ॥ यमग्ने ।
कव्यवाहनत्वंचिन्मन्यसेरयिम् ॥ तन्नोगीर्भिःश्रवाय्यन्देवत्रापन
यायुजम् ॥ ६४ ॥ योऽअग्निः । कव्यवाहनःपितॄन्यक्षदृतावृधः ॥
प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्यऽआ ॥ ६५ ॥ त्वमग्ने ॥ त्वम
ग्नऽईडितःकव्यवाहनावाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृ

ङ्भ्यं॑ स्वधया॒ते॑ऽअक्षन्न॒द्धि त्वन्दे॑व॒ प्रय॑ता ह॒वींषि ॥६६॥ येचं ॥ ये
चे॒ह पि॒तरो॒ ये च॒ नेह याँश्च॑ वि॒द्म याँ२॥ऽउं च॒ न प्र॑वि॒द्म ॥ त्वं वे॑त्थ॒ यति॒ ते
जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञ६सुकृ॑तञ्जुषस्व ॥६७॥ इ॒दम्पि॒तृभ्यो॒ नमो॑ऽ
अस्त्व॒द्य ये पूर्वा॑सो॒ यऽउप॑रास॒ऽई॒युः ॥ ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒
न६सु॑वृ॒जना॑सु वि॒क्षु ॥६८॥ अधा॒ यथा॑ । नः पि॒तरः॒ परा॑सः प्र॒त्नासो॑ऽ
अग्नऽऋ॒तमा॑शुषा॒णाः ॥ शुची॒दय॒न्दीधि॑तिमुक्थ॒शासः॒ क्षामा॑ भि॒न्द
न्तो॑ऽअरु॒णीरप॑ व्रन् ॥ ६९ ॥ उशन्त॑स्त्वा ॥ उ॒शन्त॑स्त्वा॒ निधी॑मह्यु॒

शन्तुᳩसमिंधीमहि ॥ उशन्तुंशतऽआवंहपितृन्हविषेऽअत्तंवे ॥७०॥
अपाम्फेनेनं ॥ अपाम्फेनेननमुचेᳩशिरंऽइन्द्रोदंवर्त्तयᳩ ॥ विश्वायद
जंयुस्पृधंः ॥ ७१ ॥ [ १० ] सोमोराजा ॥ सोमोराजामृतᳪसुतऽ
ऋजीषेणाजहान्मृत्युम् ॥ ऋतेनंसत्यमिन्द्रियम्विपानᳪशुक्रमन्धं
सऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥ ७२ ॥ अद्भ्यःक्षीरम् ॥ अद्भ्यः
क्षीरंव्यंपिबत्कुङ्ङाङ्गिरसोधिया ॥ ऋतेनंसत्यमिन्द्रियंविपानᳪशु
क्रमन्धंसऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥७३॥ सोमंमद्भ्यःसो

मंमुब्ध्योब्ध्यंपिबच्छन्दंसाहुछंसःशुंचिषत् ॥ ऋतेनंसुत्यमिन्द्रियंविपा
नंछशुक्रमन्धंसुइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥ ७४ ॥ ११००
शतम्० ॥ अन्नात्परिस्तुतं÷ ॥ अन्नांत्परिस्तुतोरसम्ब्रह्मंणाब्ध्यंपिब
त्क्षत्रम्पयुःसोमंम्प्रजापंतिः ॥ ऋतेनंसुत्यमिन्द्रियंविपानछशुक्रम
न्धंसुऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥ ७५ ॥ रेतोमूत्रंम् ॥ रेतोमू
त्रंविजंहातियोनिंम्प्रविशदिन्द्रियम् ॥ गर्ब्भोजरायुणावृंतऽउल्बंज्ज
हातिजन्मंना ॥ ऋतेनंसुत्यमिन्द्रियंविपानछशुक्रमन्धंसुऽइन्द्रंस्ये

॥१८२॥

न्द्रियमिदम्पयोमृतम्मधु ॥७६॥ दृष्ट्वा रूपे । व्याकरोत्सत्यानृते प्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्रद्धाᳬंसत्ये प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानᳬंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७७ ॥ वेदेन रूपे । व्यपिबत्सुतासुतौ प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानᳬंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७८॥ दृष्ट्वापरितस्रुतं÷ ॥ दृष्ट्वापरिस्रुतोरसᳬंशुक्रेणशुक्रंव्यपिबत्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानᳬंशुक्रमन्धसऽइन्द्रस्येन्द्रि

यमिदम्पयोमृतम्मधु ॥ ७९॥ [८] सीसैनतन्त्रम् ॥ सीसैनतन्त्रम्म
नसामनीषिणऽऊर्णासूत्रेणकवयोवयन्ति ॥ अश्विनायज्ञꣳसविता
सरस्वतीन्द्रस्यरूपंवरुणोभिषज्यन् ॥ ८० ॥ तदस्य । रूपममृतꣳ
शचीभिस्तिस्रोदधुर्देवताꣳसꣳरराणाः ॥ लोमानिशष्पैर्बहुधानतो
क्मभिस्त्वगस्यमाꣳसमभवन्नलाजाः ॥८१॥ तदश्विना । भिषजा
रुद्रवर्त्तनीसरस्वतीवयतिपेशोऽअन्तरम् ॥ अस्त्थिमज्जानम्मासरैꣳ
कारोतरेणदधतोगवान्त्वचि ॥ ८२ ॥ सरस्वतीमनसा । पेशलंवसु

नासत्याभ्यांवयतिदर्शतंवपु÷ ॥ रसम्परिस्रुतानरोहितन्नग्नहुर्द्धीर स्तसरन्नवेम ॥ ८३ ॥ पयसाशुक्रम् ॥ पयसाशुक्रममृतञ्जनित्रꣳसु रेयामूत्राञ्जनयन्तरेत÷ ॥ अपामतिन्दुर्म्मतिम्बाधमानाऽऊवध्यंवा तꣳसर्व्वन्तदारात् ॥ ८४ ॥ इन्द्र÷सुत्रामाहृदयेनसत्यम्पुरोडाशेन सविताजजान ॥ यकृत्क्लोमानंवरुणोभिषज्यन्मतस्नेवायव्यैर्न्नमिं नातिपित्तम् ॥ ८५ ॥ आन्त्राणिस्थालीः ॥ आन्त्राणिस्थालीर्म्म धुपिन्वमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्येनस्यपत्रन्नप्लीहाश

सा॒ते ॥ ८९ ॥ अ॒वि॒र्न्न । मे॒षा॑ ॥ रसं॑म्परि॒स्रु॒ता॒नरो॑हि॑तन्न॒ग्न॒हु॒र्द्धी॑र॒
ग्ग्रहा॑भ्याम्॥सर॑स्वत्युपवा॒कैर्व्य॒म् ॥ पय॑सा॒शु॒क्रम॒मृ॒तं॒ज्ज॒नि॒त्र॒ꣳसु
इन्द्र॑स्य॒रू॒पम्॒ ॥ इन्द्र॑स्य॒रू॒पमृ॒ष॒भ॒ति॒न्द्रु॒म्म॒र्ति॒म्बा॒ध॑माना॒ऽऊव॑द्ध्य॒ंवा
ग्रहा॑भ्याम् ॥ य॒वा॒नब॒र्हिर्भ्र॒ु॒वि॒दे॒ सु॒त्रा॒मा॒हृद॑येनस॒त्यम्पु॑रो॒डाशे॑न
खा॒त॒ ॥ ९१ ॥ आ॒त्क॒मन्त्र॒ु॒पस्त्थे ॥ भि॒षज्ज्य॒त्क्म॒त॑स्त्रे॒वा॒यु॒व्व्यै॑र्न्न॒मि॑
खे॒श्म॒श्श्रू॒णि॒न॒व्व्या॑ग्घ्र॒लो॒म ॥ केशा॒र्ल्ली॒ ॥ आ॒न्त्रा॒णि॑स्त्था॒लीम्म॒
ह॒स्य॒लो॒म॒त्त्वि॒षि॑रिन्द्रि॒या॒णि ॥ ९२ ॥ उ॒रुः ॥ श्ये॒न॒स्य॒पत्त्रन्न॒प्ली॒हा॒श

त्वमग्निभिषजातदश्विनात्मानमङ्गैꣳसमधात्सरस्वती ॥ इन्द्रस्यरू
पꣳशतमानमायुश्चन्द्रेणज्ज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वती
योन्याम् ॥ सरस्वतीयोन्याङ्गर्भमन्तरश्विभ्याम्पत्नीसुकृतम्बि
भर्ति ॥ अपाꣳरसेनवरुणोनसाम्नेन्द्रꣳश्रियैजनयन्नप्सुराजा
॥ ९४ ॥ तेजःपशूनाम् ॥ तेजःपशूनाꣳहविरिन्द्रियावत्परिस्रु
तापयसासारघम्मधु ॥ अश्विभ्यान्दुग्धम्भिषजासरस्वत्यासुता
सुताभ्याममृतꣳसोमऽइन्दुः ॥ ९५ ॥ [१६] इतिश्रीवाजसनेयसं

हितायांएकोनविंशतितमोऽध्यायः ॥ १९ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम् ॥ क्षत्रस्ययोनिस्त्रयोदशयद्देवादशाभ्यादधाम्यष्टौ
योभूतानांचतस्रःसमिद्धइंद्रएकादशायात्वष्टौसमिद्धोअग्निर्द्वादशा
श्विनाहविस्त्रयोदशाश्विनातेजसैकादशनवनवातिः ॥ हरिःॐ क्षत्र
स्ययोनिं÷ ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ मात्वाहिꣳसी
न्मामाहिꣳसीः ॥ १ ॥ निषसाद । धृतव्रतोवरुणꣳपस्त्यास्वा ॥
साम्राज्यायसुक्रतुं÷ ॥ मृत्योःपाहिविद्योत्पाहि ॥ २ ॥ देवस्यत्वा ।

सवितुश्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भै
षज्येनतेजसेब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्य्या
यान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्श्रियैयशसेभिषिञ्चा
मि ॥ ३ ॥ कोसि । कतमोसिकस्मैत्वाकायत्वा ॥ सुश्लोकसुमङ्ग
लसत्यराजन् ॥ ४ ॥ शिरोमे ॥ शिरोमेश्रीर्य्यशोमुखन्त्विषिःके
शाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतंᳫसम्म्राट्चक्षुर्विराट्श्रोत्र
म् ॥ ५ ॥ जिह्वामे । भद्रंवाङ्महोमनोमन्युःस्वराडामः ॥ मोदाः

प्प्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ६ ॥ बाहूमे ॥ बाहूमेबलमिन्द्रियᳯहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥७॥ पृष्ठीर्म्मे । राष्ट्रमुदरमᳯसौग्ग्रीवाश्चश्श्रोणी । ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्वतः ॥ ८ ॥ नाभिर्म्मे । चित्तंविज्ञानम्पायुर्म्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगᳯसौभाग्ग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजाप्प्रतिष्ठितः ॥ ९ ॥ प्प्रतिक्षत्रे । प्प्रतितिष्ठामिराष्ट्रेप्प्रत्यश्वेषुप्प्रतितिष्ठामिगोषु ॥ प्रत्यङ्गेषुप्प्रतिति

ष्ठाम्म्यात्क्मन्न्प्रतिंष्प्राणेषुष्प्रतितिष्ठामिपुष्टेष्प्रतिद्यावापृथिव्योःष्प्र
तितिष्ठामियज्ञे ॥ १० ॥ त्रयादेवाः ॥ त्रयादेवाऽएकादशत्रयस्त्रिꣳ
शाःसुराधसः ॥ बृहस्पतिपुरोहितादेवस्यसवितुःसवे ॥ देवादेवैर
वन्तुमा ॥ ११ ॥ प्रथमाद्वितीयैः ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयै
स्तृतीयाःसत्येनसत्यंय्यज्ञेनयज्ञोयजुर्भिर्य्यजूꣳषिसामभिः सा
मान्यृग्भिरृचः पुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिर्य्या
ज्यावषट्कारैर्वषट्काराऽआहुतिभिराहुतयोमेकामान्त्समर्द्धयन्तुभूः

स्वाहा ॥ १२ ॥ लोमानिप्प्रयतिः ॥ लोमानिप्प्रयतिर्म्ममत्वङ्ङ्मऽ
आनंतिरागतिः ॥ माꣳसम्मऽउपनतिर्व्वस्वस्थिमज्जामऽआनतिः
॥ १३ ॥ [१३] यद्देवाः ॥ यद्देवादेवहेडनन्देवासश्चकृमावयम् ॥
अग्निर्म्मातस्म्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १४ ॥ यदिदिवा ॥
यदिदिवायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्म्मातस्म्मादेनं
सोविश्वान्मुञ्चत्वꣳहसः ॥ १५ ॥ यदिजाग्ग्रत ॥ यदिजाग्ग्रद्यदि
स्वप्नऽएनाꣳसिचकृमावयम् ॥ सूर्य्योमातस्म्मादेनसोविश्वान्मु

ञ्चुत्व६ंहसः॥१६॥ यद्ग्रामे ॥ यद्ग्रामेयदरण्येयत्सभायांय्यदिन्द्रिये ॥ यच्छूद्रेयदर्य्येयदेनश्चकृमाव्वयंय्यदेकस्याधिधर्म्मणितस्यावयजनमसि ॥१७॥ यदापः ॥ यदापोऽअग्घ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च ॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्द्देवकृतमेनोयुक्ष्यवमर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥१८॥ समुद्रेतेहृदयमप्स्वन्तः सन्त्वाविशन्त्वोषधीरुतापः ॥ सुमित्रियानऽआपऽओषधयः सन्तुदुर्म्मित्रियास्तस्मैसन्तुयो

समुविश्वमिदञ्जगत् ॥ वैश्वानरञ्ज्योतिर्भूयासंविभूङ्कामाँ्व्यूत्क्ष
वैभूश्स्वाहा ॥ २३ ॥ [१०] ॥ अभ्यादधामि ॥ सुमिधमग्ग्नेव्व्रतप
तेत्वयि ॥ व्व्रतञ्चश्श्रद्धाञ्चोपैमीन्धेत्वादीक्षितोऽअहम् ॥ २४ ॥ य
त्रब्रह्म । चक्षुत्रञ्चसम्म्यञ्चौचरतश्सह ॥ तंल्लोकम्पुण्ण्यम्प्रज्ञेषंय
त्रदेवाश्सहाग्ग्निना ॥ २५ ॥ यत्रेन्द्रः ॥ यत्रेन्द्रश्चव्वायुश्चसम्म्यञ्चौ
चरतश्सह ॥ तंल्लोकम्पुण्ण्यम्प्रज्ञेषंय्यत्रसेदिर्न्नविद्यते ॥ २६ ॥ अ
शुनाते । ऽअशुश्पृच्यतामपरुषापरुः ॥ गन्धस्तेसोममवतुमदाय

रसोऽअद्धयुतः ॥ २७ ॥ सिञ्चन्तिपरि ॥ षिञ्चत्युत्सिञ्चन्तिपुनन्तिं च ॥ सुरायैबभ्रवैमदेकिन्त्वोवदतिकिन्त्वः ॥ २८ ॥ धानावन्तङ्करम्भिणम् ॥ धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम् ॥ इन्द्रम्प्रातर्जुषस्वनः ॥ २९ ॥ बृहदिन्द्राय । गायतमरुतोवृत्रहन्तमम् ॥ येनज्योतिरजनयन्नृतावृधोदेवन्देवायजागृवि ॥ ३० ॥ अद्ध्वर्योऽअद्रिभिः । सुतꣳसोमम्पवित्रऽआनय ॥ पुनीहीन्द्रायपातवे ॥ ३१ ॥ [ ८ ] योभूतानाम् ॥ योभूतानामधिपतिर्य्यस्मिँल्लोकाऽअधिश्रि

ताः ॥ यऽईशेमहतोमहाँस्तेनंगृह्णामित्वामहम्मयिंगृह्णामित्वाम
हम् ॥ ३२ ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरंस्वत्यैत्वेन्द्रायत्वा
सुत्राम्म्णऽ एषतेयोनिंरश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्रा
म्म्णे ॥ ३३ ॥ प्राणपामें । ऽअपानपाश्चक्षुष्पाःश्रोत्रपाश्चंमे ॥ वा
चोमेविश्वभेषजोमनंसोसिविलायंकः ॥ ३४ ॥ अश्विनंकृतस्यते ॥
अश्विनंकृतस्यतेसरंस्वतिकृतस्येन्द्रेणसुत्राम्म्णाकृतस्य ॥ उपहूतऽ
उपंहूतस्यभक्षयामि ॥ ३५ ॥ [४] समिद्धऽइन्द्रः ॥ समिद्धऽइ

न्द्रऽउपसामनीकेपुरोरुचापूर्वकृद्धांवृधानः ॥ त्रिभिर्द्देवैस्त्रिꣳशताव्व
ज्रबाहुर्ज्जघानंवृत्रंविदुरोववार ॥ ३६ ॥ नराशꣳसꣳप्प्रति ॥ नरा
शꣳसꣳप्प्रतिंशूरोमिमानस्तनूनपात्प्रतियज्ञस्यधाम ॥ गोभिर्व्वपावा
न्मधुनासमञ्जन्हिरण्ण्यैश्चन्द्रीयजतिप्प्रचेताꣳ ॥ ३७ ॥ ईडितोदे
वैः ॥ ईडितोदेवैर्हरिवाँ२ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानꣳ ॥
पुरन्दरोगोत्रभिद्वज्ज्रबाहुरायातुयज्ञमुपनोजुषाणꣳ ॥ ३८ ॥ जु
षाणोबर्हिꣳ ॥ जुषाणोबर्हिर्हरिवाँ२न्नऽइन्द्रꣳप्प्राचीनꣳसीदत्प्रदि

शोपृथिव्याः ॥ उरुम्प्रथाहम्प्रथमानꣳस्योनमादित्यैरक्कंवसुभिꣳस
जोषाः॥३९॥इन्द्रन्दुरः॥कवष्योधावमानावृषाणंव्यन्तुजनेयꣳ
सुपत्नीꣳ ॥ द्वारोदेवीरभितोऽविश्श्रयन्ताꣳसुवीरावीरम्प्रथमाना
महोभिः ॥ ४० ॥ उषासानक्ता । बृहतीबृहन्तम्पयस्वतीसुदुघेशूर
मिन्द्रम् ॥ तन्तुन्ततम्पेशसासंव्वयन्तीदेवानान्देवंव्यजतꣳसुरुक्मे
॥ ४१ ॥ दैव्यामिमाना । मनुषꣳपुरुत्राहोताराविन्द्रम्प्रथमासुवा
चा ॥ मूर्द्धन्यज्ञस्यमधुनादधानाप्प्राचीनञ्ज्योतिर्हविषावृधातः

॥ ४२ ॥ तिस्रोदेवीः ॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइन्द्रञ्जुषाणा
जनयोनपत्नीः॥अच्छिन्नन्तन्तुम्पयसासरस्वतीडादेवीभारतीविश्व
तूर्तिः ॥ ४३ ॥ त्वष्टादधत् ॥ त्वष्टादधच्छुष्ममिन्द्रायवृष्णेपाको
चिष्टुर्यशसेपुरूणि ॥ वृषायजन्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमन
क्तुदेवान् ॥ ४४ ॥ वनस्पतिरवसृष्टः ॥ वनस्पतिरवसृष्टोनपाशै
स्त्मन्यासमञ्जञ्छमितानदेवः ॥ इन्द्रस्यहव्यैर्जठरम्पृणानःस्वदा
तियज्ञम्मधुनाघृतेन ॥ ४५ ॥ स्तोकानामिन्दुम् ॥ स्तोकानामिन्दु

म्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृतप्रुषामनसामो
दमाना॑स्वाहादेवाऽअमृतामादयन्ताम् ॥ ४६ ॥ [११] आयातु ॥
आयात्विन्द्रोवसऽउपनऽइहस्तुतःसधमादस्तुशूरः॥ वावृधानस्त
विषीर्य्यस्यपूर्वीर्द्यौर्न्नक्षत्रमभिभूतिपुष्यात् ॥ ४७ ॥ आनः ॥
आनऽइन्द्रोदूरादानआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजिष्ठेभि
र्न्नृपतिर्व्वज्रबाहु॑सङ्गेसमत्सुतुर्व्वणिःपृतन्यून् ॥ ४८ ॥ आनः ॥
आनऽइन्द्रोहरिभिर्य्यात्वच्छार्व्वाचीनोवसेराधसेच ॥ तिष्ठातिव

ज्जीमुघवांविरप्शीमंग्युज्ञमनुंनोवाजंसातौ ॥ ४९ ॥ त्रातारमि
न्द्रंम् ॥ त्रातारमिन्द्रंमवितारमिन्द्रꣳहवेंहवेसुहवꣳशूरमिन्द्रंम् ॥ ह्व
यांमिशुक्रम्पूंरुहूतमिन्द्रꣳस्वस्तिनोंमुघवांधात्विन्द्रंः ॥ ५० ॥ इ
न्द्रंःसुत्रामां ॥ इन्द्रंःसुत्रामास्ववाँ२ऽअवोंभिःसुमृडीकोभंवतु
विश्ववेंदाः ॥ बाधंतान्द्वेषोऽअभंयङ्कृणोतुसुवीर्य्यंस्यपतंयःस्याम
॥ ५१ ॥ तस्यंवयम् ॥ तस्यंवयꣳसुमतौयज्ञियस्यापिंभुद्रेसौंमनुसे
स्यांम ॥ ससुत्रामास्ववाँऽइन्द्रोंऽअस्मेऽआराच्चिद्द्वेषंःसनुतर्य्युंयो

तु ॥५२॥ आमन्द्रैः ॥ आमन्द्रैरिन्द्रहरिभिर्य्याहिमयूररोमभिः ॥
मात्वाकेचिन्नियमन्विपाशिनोतिधन्वेवताँ२इहि ॥ ५३ ॥ एवेत् ॥
एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्च्चन्त्यर्कैः ॥ सनस्तुतो
वीरवद्धातुगोमद्यूयम्पातस्वस्तिभिःसदानः ॥ ५४॥ [८] समिद्धोऽ
अग्निः ॥ समिद्धोऽअग्निरश्विनातप्तोघर्म्मोविराट्सुतः ॥ दुहेधेनुः
सरस्वतीसोमᳪशुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा । सुतेश्वि
नोभासरस्वती ॥ मध्वारजाᳪसीन्द्रियमिन्द्रायपथिभिर्वहान् ॥

॥५६॥ इन्द्रायेन्दुंम् ॥ इन्द्रायेन्दु६ सरंस्वतीनराशं६ सेननुग्नहुंम् ॥
अधातामश्विनामधुंभेषजम्भिषजांसुते ॥ ५७ ॥ आजुह्वांनासरं
स्वती । न्द्रायेन्द्रियाणिवीर्यम् ॥ इडांभिरश्विनाविषहसमूर्ज्जह
स६रयिन्दधुः ॥ ५८ ॥ अश्विनानमुचेः । सुत६ सोमं६ शुक्रम्परि
स्रुतां ॥ सरंस्वतीतमाभंरद्बर्हिषेन्द्रायपातंवे ॥ ५९ ॥ कवष्ष्योन ।
व्यचंस्वतीरश्विभ्यान्नदुरोदिशं ॥ इन्द्रोनरोदंसीऽउभेदुहेकामा
न्तसरंस्वती ॥६०॥ उषासानक्कम् ॥ उषासानक्कमश्विनादिवेन्द्रं६

सायमिन्द्रियैः ॥ सञ्ज्ञानानेसुपेशसासमञ्ज्ञातेसरस्वत्या ॥ ६१ ॥
पातन्नः ॥ पातन्नोऽअश्विनादिवांपाहिनक्कंꣳसरस्वति ॥ दैव्याहो
ताराभिषजापातमिन्द्रꣳसचासुते ॥ ६२ ॥ तिस्रस्त्रेधा । सरस्वत्य
श्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम् ॥६३॥
अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभेषजन्नःसरस्वती ॥ इन्द्रे
त्वष्टायशःश्रियꣳरूपꣳरूपमधुःसुते ॥ ६४ ॥ ऋतुथेन्द्रः ॥ ऋतु
थेन्द्रोवनस्पतिःशशमानःपरिस्रुता ॥ कीलालमश्विभ्याम्मधुन्दु

हेधेनुᳬंसरंस्वती ॥६५॥ गोभिर्न्न । सोमंमश्विनामासंरेणपरिंस्रुतां ॥ समंधातुᳬंसरंस्वत्यास्वाहेन्द्रेंसुतम्मधुं ॥ ६६ ॥ [ १२ ] अश्विनांहु विः ॥ अश्विनांहुविरिंन्द्रियन्नमुंचोर्द्धियासरंस्वती ॥ आशुक्रमांसुरा द्वसुंमघमिन्द्रांयजभ्रिरे ॥ ६७ ॥ यमश्विनां ॥ यमश्विनासरंस्व तीहुविषेन्द्रमवंर्द्धयन् ॥ सबिंभेदबुलम्मघन्नमुंचावासुरेसचां ॥६८॥ तमिन्द्रंम् ॥ तमिन्द्रंम्पशवᳬंसचाश्विनोभासरंस्वती ॥ दधांनाऽअ भ्यनूषतहुविषांयुज्ञऽइन्द्रियैः ॥ ६९ ॥ यऽइन्द्रें ॥ यऽइन्द्रेऽइन्द्रि

यन्दुधुश्सवितावरुणोभर्गः ॥ ससुत्रामाहविष्पतिर्य्यजमानायस
श्वत ॥ ७० ॥ सवितावरुणं ॥ सवितावरुणोदधद्यजमानायदा
शुषे ॥ आदत्तनमुचेर्व्वसुसुत्रामाबलमिन्द्रियम् ॥ ७१ ॥ वरुणक्षत्
त्रम् ॥ वरुणक्षत्त्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशं
साबलन्दधानायज्ञमाशत ॥ ७२ ॥ अश्विनागोभिः ॥ अश्विना
गोभिरिन्द्रियमश्वेभिर्व्वीर्य्यम्बलम् ॥ हविषेन्द्रसरस्वतीयजमान
मवर्द्धयन् ॥ ७३ ॥ तानासत्या । सुपेशसाहिरण्यवर्त्तनीनरा ॥

सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत ॥ ७४ ॥ ताभिषजां । सुक
र्म्मणासासुदुघासरस्वती ॥ सुवृत्रहाशतक्रतुरिन्द्रायदधुरिन्द्रियम्
॥ ७५ ॥ युवᳬसुरामम् ॥ युवᳬसुराममश्विनानमुचावासुरेसचा ॥
विपिपानाᳬसरस्वतीन्द्रकर्म्मस्वावत ॥ ७६ ॥ पुत्रमिवपितरौ ॥
पुत्रमिवपितरावश्विनोभेन्द्रावथुᳬकाव्यैर्दᳬसनाभिᳬ ॥ यत्सुराम्
व्यपिवᳬशचीभिᳬसरस्वतीत्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्
न्नश्वासᳬ ॥ यस्मिन्नश्वासऽऋषभासऽउक्षणोवशामेषाऽअवसृष्टा

सऽआहुंताः ॥ कीलालपेसोमंपृष्ठायवेधसेहृदामतिञ्जनयेचारुम
ग्नये॥ ७८॥ अहांव्ययग्ने। हविरास्येतेस्रुचीवघृतञ्चम्वीवसोमं÷॥
वाजसनिंरयिमस्म्मेसुवीरंम्प्रशस्तन्धेहियशसम्बृहन्तम् ॥ ७९॥
[१३] शतम् १२०० ॥ अश्विनातेजंसा। चक्षुं÷प्प्राणेनसरंस्वती
वीर्य्यम् ॥ वाचेन्द्रोबलेनेन्द्रांयदधुरिन्द्रियम् ॥ ८० ॥ गोमंदुपुणा
सत्या ॥ गोमंदुपुणासत्याश्वांवद्यातमश्विना ॥ वर्त्तीरुद्रानृपाय्यम्
॥ ८१ ॥ नयत् ॥ नयत्परोनान्तरऽआदधर्षंद्वृषण्वसू ॥ दुःशंसो

मत्यौंरिपुः ॥ ८२ ॥ तानं÷ ॥ तानुऽआवोढमाश्विनारयिम्पिशङ्ग
सन्दृशम् ॥ धिष्ण्यांवारिवोविदंम् ॥ ८३ ॥ पावकानं÷ ॥ पावका
नुःसरंस्वतीवाजेंभिर्व्वाजिनींवती ॥ यज्ञंवंष्टुधियावंसुः ॥ ८४ ॥ चो
दुयित्रीसूनृतांनाम् ॥ चोदुयित्रीसूनृतांनाञ्चेतंन्तीसुमतीनाम् ॥ यु
ज्ञन्दंधेसरंस्वती ॥ ८५ ॥ मुहोऽअर्ण्णं÷ ॥ मुहोऽअर्ण्णःसरंस्वतीप्प्र
चैतयतिकेतुना ॥ धियोविश्वाविरांजति ॥ ८६ ॥ इन्द्रायांहि । चि
त्रभानोसुताऽइमेत्वायवं÷ ॥ अण्वींभिस्तनांपूतासं÷ ॥ ८७ ॥

इन्द्रायाहि । धियेषितोविप्रंजूतंसुतावतः ॥ उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्रायाहि ॥ इन्द्रायाहितूतुंजानऽउपब्रह्माणिहरिवः ॥ सुतेदधिष्वनश्चनः ॥ ८९ ॥ अश्विनापिबताम् ॥ अश्विनापिबताम्मधुसरस्वत्यासजोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषताᳬसोम्यम्मधु ॥ ९० ॥ [ ११ ] इतिश्रीवाजसेनयसंहितायांविंशातितमोऽध्यायः ॥ २० ॥ ॥ ॥ श्रीवेदपुरुषायनमः ॥ ॥ ॥

इति श्रीवाजसनेयसंहितापूर्वविंशातिः समाप्ता ॥

॥ श्रीगणेशायनमः ॥ अनुवाकूसूत्रम् ॥ इमम्मेसमिद्धोअग्निरेका
दशकौवसंतेनऋतुनाषड्ढोतायक्षत्सामिधाग्निंद्वादशाश्विनौछागस्य
सप्तदेवंबर्हिश्चतुर्दशषडेकषष्टिः ॥ हरिःॐ इमम्मे । वरुणश्श्रुधीह
वमुद्याचंमृडय ॥ त्वामंवस्युराचंके ॥ १ ॥ तत्त्वां । यामिब्रह्मंणा
वन्दंमानुस्तदाशांस्तेयजंमानोहुविर्भिः ॥ अहेडमानोवरुणेहवो
द्धुरुंश६समानऽआयुःप्रमोंषीः ॥ २ ॥ त्वन्नंः ॥ त्वन्नोंऽअग्नेवरु
णस्यविद्वान्देवस्यहेडोऽअवंयासिसीष्ठाः ॥ यजिंष्ठोवन्हितमुःशो

शुंचानोविश्वाद्वेषांꣳसिप्प्रमुंमुग्ध्यस्म्मत् ॥ ३ ॥ सत्वम् ॥ सत्व
न्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसोव्युष्टौ ॥ अवंयक्ष्वनोव
रुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधि ॥ ४ ॥ महीमूषु । मातरꣳ
सुव्रतानामृतस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳसु
शर्म्माणमदितिꣳसुप्प्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रा
माणम्पृथिवीन्द्यामनेहसꣳसुशर्म्माणमदितिꣳसुप्प्रणीतिम् ॥ देवी
न्नावꣳस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॥ ६ ॥ सुनावमा

रुहेयम् ॥ सुनावमारुहेयमस्रवन्तीमनागसम् ॥ शतारित्राᳬस्वस्त
ये ॥ ७ ॥ आनं÷ ॥ आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम् ॥ म
द्ध्वारजाᳬसिसुक्रतू ॥ ८ ॥ प्रबाहवा । सिसृतञ्जीवसेनऽआनोगव्यू
तिमुक्षतङ्घृतेन ॥ आमाजनेश्श्रवयतंय्युवानाश्श्रुतम्मेमित्रावरुणा
हवेमा ॥ ९ ॥ शन्नं÷ ॥ शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्र
वःस्वर्काः ॥ जम्भयन्तोहिंवृकᳯरक्षाᳬसिसनेम्म्यस्म्मद्युयवन्नमी
वाः ॥ १० ॥ वाजेवाजेवत । वाजिनोनोधनेषुविप्प्राऽअमृताऽऋ

तन्नाः ॥ अस्यमद्धः पिबतमादयंध्वन्तृप्तायातपथिभिर्देवयानैः
॥ ११ ॥ समिद्धोऽअग्निः ॥ समिधासुसमिद्धोवरेण्यः ॥ गायत्री
च्छन्दऽइन्द्रियन्त्र्यविर्गौर्वयोदधुः ॥ १२ ॥ तनूनपाच्छुचिव्रतः ॥
तनूनपाच्छुचिव्रतस्तनूपाश्चसरस्वती ॥ उष्णिहाच्छन्दऽइन्द्रिय
न्दित्यवाड्गौर्वयोदधुः ॥ १३ ॥ इडाभिरग्निः ॥ इडाभिरग्निरीड्यः
सोमोदेवोऽअमर्त्यः॥ अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्गौर्वयोदधुः
॥ १४ ॥ सुबर्हिरग्निः । पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः ॥ बृहतीच्छ

शंसाबलꣳहुविरिन्द्रेवयोदधुः ॥ २४ ॥ वृर्षाभिर्ऋतुनादित्याःस्तो मैसप्तदुशेस्तुताः ॥ वैरूपेणाविशौजसाहुविरिन्द्रेवयोदधुः ॥२५॥ शारदेनर्ऽऋतुना । देवाऽएकविꣳशऽऋभवंस्तुताः ॥ वैराजेनश्रिया श्रियꣳहुविरिन्द्रेवयोदधुः ॥ २६ ॥ हेमन्तेनर्ऽऋतुना । देवास्त्रिणवेमुरुतःस्तुताः ॥ बलेनशक्करीःसहोहुविरिन्द्रेवयोदधुः ॥२७॥ शैशिरेणर्ऽऋतुना । देवास्त्रयस्त्रिꣳशेमृताःस्तुताः ॥ सुत्येनरेवतीःक्षुत्रꣳहुविरिन्द्रेवयोदधुः ॥ २८ ॥ [ ६ ] होतायक्षत् ॥ होतायक्ष

त्समिधाग्निमिडस्पदेऽश्विनेन्द्रꣳसरस्वतीमजोधूम्म्रोनगोधूमैꣳकुवलैर्भेषजम्मधुशष्पैर्न्नतेजऽइन्द्रियम्पयꣳसोमꣳपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ २९ ॥ होतायक्षत्तनूनपात्सरस्वतीम् ॥ होतायक्षत्तनूनपात्सरस्वतीमविर्म्मेषोनभेषजम्पथामधुमताभरन्नश्विनेन्द्रायवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिꣳपयꣳसोमꣳपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३० ॥ होतायक्षन्नराशꣳसन्न। नग्नहुम्पतिꣳसुरयाभेषजम्मेषꣳसरस्वतीभिषग्रथो

नचन्द्रयुश्विनौर्वपा ऽइन्द्रस्यवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तो
क्कर्माभिःपयःसोमः परिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज
॥ ३१ ॥ होतायक्षदिडेडितः ॥ होतायक्षदिडेडितऽआजुह्वानःसर
स्वतीमिन्द्रम्बलेनवर्द्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्रायभेषजंय्यवै
ःकर्कन्धुभिर्म्मधुलाजैर्न्नमासरम्पयःसोमः परिस्रुताघृतम्मधुव्य
न्त्वाज्यस्यहोतर्य्यज ॥३२॥ होतायक्षद्बर्हिरूर्णम्म्रदाः ॥ होताय
क्षद्बर्हिरूर्णम्म्रदाभिषङ्नासत्याभिषजाश्विनाश्वाशिशुमतीभिष

म्धेनुꣳसरस्वतीभिषग्दुहऽ इन्द्रायमेषम्पयꣳसोमः परिस्रुताघृत
म्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥३३॥ होतायक्षद्दुरोदिशः कवष्ष्यो
नव्यचस्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुꣳसर
स्वत्यश्विनेन्द्रायभेषजꣳशुक्रन्नज्ज्योतिरिन्द्रियम्पयꣳसोमः परि
स्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ होतायक्षत्सुपेशः।
सोषेनक्कन्दिवाश्विनासमञ्ज्ञातेसरस्वत्यात्विषिमिन्द्रेनभेषजꣳ
श्येनोनरजसाहृदाश्रियानमासरम्पयꣳसोमः परिस्रुताघृतम्मधु

व्यन्त्वाज्ज्यस्यहोतर्य्यजं ॥३५॥ होतायक्षुद्दैव्याहोतारा । भिषजा
श्विनेन्द्रन्नजागृविदिवानक्कन्नभेषजैः शूषन्नुसरस्वतीभिषक्सीसेन
दुहऽइन्द्रियम्पयःसोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्य
ज ॥ ३६ ॥ होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषज
न्त्रयस्त्रिधातवोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचास
रस्वतीमहऽ इन्द्रायदुहइन्द्रियम्पयःसोमः परिस्रुताघृतम्मधुव्य
न्त्वाज्ज्यस्यहोतर्य्यज ॥३७॥ होतायक्षत्सुरेतसमृषभम् ॥ होतायक्ष

त्सुरेतंसमृषभन्नव्वयाँपसुन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरंस्वतीमो
जोनजूतिरिन्द्रियंव्वृकोनरंभसोभिषग्ग्यशꣳसुरंयाभेषजꣳश्रियान
मासंरम्पयꣳसोमं÷ परिस्रुतांघृतम्मधुव्व्यन्त्वाज्ज्यंस्यहोतर्व्वयंज
॥ ३८ ॥ होतायक्षद्वनस्पतिꣳशमितारम् ॥ होतायक्षद्वनस्पतिꣳ
शमितारꣳशतक्रतुम्भीमन्नमन्युꣳराजानंव्व्याघ्रन्नमसाश्विनाभा
मꣳसरंस्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमं÷परिस्रुतांघृतम्म
धुव्व्यन्त्वाज्ज्यंस्यहोतर्व्वयंज ॥३९॥ होतायक्षदग्निꣳस्वाहा ॥ होता

यक्षदुग्निꣳस्वाहाज्ज्यंस्यस्तोकानाꣳस्वाहामेदंसाम्पृथक्स्वाहाच्छा
गंमुश्विभ्याꣳस्वाहांमेषꣳसरंस्वत्यैस्वाहाऽऋषभमिन्द्रांयसिꣳहा
यसहंसऽइन्द्रियꣳस्वाहाग्निर्नभैषजꣳस्वाहासोमंमिन्द्रियꣳस्वाहे
न्द्रꣳसुत्रामांणꣳसवितारंवरुणम्भिषजाम्पतिꣳस्वाहाव्वनस्पातिं
म्प्रियम्पाथोनभैषजꣳस्वाहांदेवाऽआंज्ज्यपाजुषाणोऽअग्निर्भैषज
म्पयꣳसोमं÷परिस्रुतांघृतम्मधुव्यन्त्वाज्ज्यंस्यहोतर्य्यज ॥ ४० ॥
[१२] होतांयक्षदश्विनौछागंस्य । व्वपायामेदंसोजुषेताꣳहविर्होत

र्य्यज ॥ होतायक्षत्सरस्वतीम्मेषस्यवपायामेदसोजुषताᳬंहविर्होत

र्य्यज ॥ होतायक्षदिन्द्रमृषभस्यवपायामेदसोजुषताᳬंहविर्होत

र्य्यज ॥ ४१ ॥ होतायक्षदश्विनौसरस्वतीम् ॥ होतायक्षदश्विनौ

सरस्वतीमिन्द्रᳬंसुत्रामाणमिमेसोमाः सुरामाणश्छागैर्न्नमेषैर्ऋष

भैःसुताः शष्पैर्न्नतोक्मभिर्ल्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृ

ताःशुक्राःपयस्वन्तोमृताः प्रस्थितावोमधुश्चुतस्तानश्विनासरस्व

तीन्द्रः सुत्रामावृत्रहाजुषन्ताᳬंसोम्म्यम्मधुपिबन्तुमदन्तुव्यन्तु

होतर्य्यर्ज ॥ ४२ ॥ होतायक्षदुश्विनौछागस्य ॥ हुविषुऽआत्तांमु
द्यमद्ध्यतोमेदुऽउद्भृतम्पुराद्द्वेषोभ्यःपुरापौरुषेय्याग्गृभोघस्तान्नून
ङ्घासेऽअंज्राणांय्यवसप्प्रथमानाᳬं सुमत्क्षराणाᳬंशतरुद्रियाणा
मग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामुतऽउ
त्सादुतोङ्गादङ्गादवत्तानाङ्करतऽएवाश्विनाजुषेताᳬंहुविर्होतर्य्यर्ज
॥ ४३ ॥ होतायक्षत्सरस्वतीम्मेषस्यहुविषुऽआवयदुद्यमद्ध्यतोमेदुऽ
उद्भृतम्पुराद्द्वेषोभ्यः पुरापौरुषेय्याग्गृभोघसन्नूनङ्घासेऽअंज्राणां

य्यवसप्प्रथमानाᳪं सुमत्क्षराणाᳪं शतरुद्रियाणामग्निष्ष्वात्ताना
म्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोऽङ्गादङ्गा
दवत्तानाङ्करदेवᳪं सरस्वतीजुषताᳪं हविर्होतर्य्यज ॥ ४४ ॥ होता
यक्षदिन्द्रमृषभस्य हविषऽआवयदद्यमध्यतोमेदऽउद्भृतम्पुराद्द्वेषो
भ्यः पुरापौरुषेय्या गृभो घसन्नूनङ्घासेऽ अज्राणां य्यवसप्प्रथमा
नाᳪं सुमत्क्षराणाᳪं शतरुद्रियाणामग्निष्ष्वात्तानाम्पीवोपवसना
नाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोऽङ्गादङ्गादवत्तानाङ्करदेव

मिन्द्रोजुषताᳬंहविर्होतर्य्यजं ॥ ४५ ॥ होतायक्षद्वनस्प्पतिंमभि ।
हिपिष्टतमयारभिष्ठयारशनयाधित ॥ यत्राश्विनो श्छागस्यहविषं÷
प्प्रियाधामानियत्रसरस्वत्यामेषस्यहविषं÷प्प्रियाधामानियत्रेन्द्र
स्यऽऋषभस्यहविषं÷ प्प्रियाधामानियत्राग्ने॰ प्प्रियाधामानियत्र
सोमस्यप्प्रियाधामानियत्रेन्द्रस्यसुत्राम्म्णं÷प्प्रियाधामानियत्रस
वितुश्प्प्रियाधामानियत्रव्वरुणस्यप्प्रियाधामानियत्रव्वनस्प्पतेंश्प्प्रि
यापाथाᳬसियत्रदेवानामाज्ज्यपानाम्प्रियाधामानियत्राग्नेहोतु÷

प्रियाधामांनितत्रैतान्प्रस्तुत्यैवोपस्तुत्यैवोपावंस्रक्षुद्रभीयसऽइव
कृत्वीकरदेवन्देवोवनस्प्पतिर्ज्जुषतांᳫंहविर्होतर्य्यजं॥४६॥होतांय
क्षदग्निᳫंस्विष्टकृतम् ॥ होतांयक्षदग्निᳫंस्विष्टकृतमयांडग्निरश्विनो
श्छागस्यहविषः प्प्रियाधामान्ययाट्सरस्वत्यामेषस्यहविषः प्प्रिया
धामान्ययाडिन्द्रस्यऽऋषभस्यंहविषः प्प्रियाधामान्ययांडग्नेश्प्प्रि
याधामान्ययाट्सोमस्याप्रियाधामान्ययाडिन्द्रंस्यसुत्राम्म्णंः प्प्रिया
धामान्ययांट्सवितुश्प्प्रियाधामान्ययाड्वरुणस्यप्प्रियाधामान्ययाड्

नस्प्पतेंᳫंप्प्रियापाथाᳬंस्ययाड्डेवानामाज्यपानांप्प्रियाधामानियक्षे
द्यग्नेहोंतुंः प्प्रियाधामानियक्षत्त्वम्महिमानमायजतामेज्याऽइ
षःकृणोतुसोऽअंद्धराजातवेदाजुषताᳬंहविर्होतर्य्यज ॥४७॥ [७]
देवम्बर्हिᳫंसरस्वतीसुदेवमिन्द्रेऽअश्विना ॥ तेजोनचक्षुरक्ष्योर्ब्बर्हिषा
दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥४८॥ देवीद्द्वारः ॥ देवीद्द्वा
रोऽअश्विनाभिषजेन्द्रेसरस्वती ॥ प्राणन्नवीर्य्यन्नसिद्द्वारोदधुरिन्द्रि
यंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥४९॥ देवीऽउषासौ ॥ देवीऽउषासाव

श्विनासुत्रामेन्द्रेसरस्वती ॥बलन्नवाचंमास्यऽउपाभ्यान्दधुरिन्द्रियं
वंसुवनेवसुधेयंस्यव्यन्तुयज ॥५०॥ देवीजोष्ट्री॥देवीजोष्ट्रीसरस्वत्य
श्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरिन्द्रि
यंवंसुवनेवसुधेयंस्यव्यन्तुयज ॥ ५१ ॥ देवीऽऊर्ज्जाहुती ॥ देवीऽ
ऊर्ज्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्यश्विनाभिषजावतः ॥ शुक्रन्नज्ज्यो
तिस्तनयोराहुतीधत्तऽइन्द्रियम्वसुवनेवसुधेयंस्यव्यन्तुयज ॥५२॥
देवादेवानाम् ॥ देवादेवानाम्भिषजाहोताराविन्द्रमश्विना ॥ वषट्

कारैश्सरंस्वतीत्विषिन्नहृदयेमतिꣳहोतृंभ्यान्दधुरिन्द्रियंव्वसुवनें
व्वसुधेयस्यव्यन्तुयजं ॥५३॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीर
श्विनेडासरंस्वती ॥ शूषन्नमध्येनाभ्यामिन्द्रायदधुरिन्द्रियंव्वसुवनें
व्वसुधेयस्यव्यन्तुयजं ॥५४॥ देवऽइन्द्रः ॥ देवऽइन्द्रोनराशꣳसस्त्रि
वरूथश्सरंस्वत्याश्विभ्यामीयतेरथः ॥ रेतोनरूपममृतञ्जनित्रमि
न्द्रायत्वष्टादधंदिन्द्रियाणिंव्वसुवनेव्वसुधेयस्यव्यन्तुयजं ॥ ५५ ॥
देवोदेवैः ॥ देवोदेवैर्व्वनस्पातिर्हिरंण्ययपर्णोऽअश्विभ्याꣳसरंस्व

त्यासुपिप्पलऽइन्द्रायपच्यतेमधु । ओजोनजूतिर्ऋषभोनभामंवन
स्पतिर्न्नोदधदिन्द्रियाणिव्वसुवनेव्वसुधेयस्यव्यतुयज ॥ ५६ ॥ देवम्ब
र्हिः ॥ देवम्बर्हिर्व्वारितीनामध्वरेस्तीर्णमश्विभ्यामूर्णम्म्रदाः सरस्व
त्यास्योनमिन्द्रतेसदः ॥ ईशायैमन्युᳬराजानम्बर्हिषादधुरिन्द्रियं
व्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५७ ॥ देवोऽअग्निः स्विष्टकृद्देवान्यक्षद्य
थायथᳬ होताराविन्द्रमश्विनावाचावाचᳬ सरस्वतीमग्निᳬसोमᳬ
स्विष्टकृत्स्विष्टऽइन्द्रः सुत्रामासवितावरुणोभिषगिष्टोदेवोवनस्प

तिꣳस्विष्टादेवाऽआज्यपाꣳस्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृ
द्यशोनदधदिन्द्रियमूर्ज्जमपचितिꣳस्वधांवसुवनेवसुधेयस्यव्यन्तु
यज ॥ ५८ ॥ अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीः
पचन्पुरोडाशान्बध्नन्नश्विभ्याञ्छागꣳसरस्वत्यैमेषमिन्द्रायऽ
ऋषभꣳसुन्वन्नश्विभ्याꣳसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमा
न्त्सूपस्थाऽअद्य ॥ ५९ ॥ सूपस्थाऽअद्यदेवोवनस्पतिरभवद
श्विभ्याञ्छागेनसरस्वत्यैमेषेणेन्द्रायऽऋषभेणाक्षँस्तान्मेदस्तःप्र

तिंपचुतागृंभीषुतावींवृधन्तपुरोडाशैरपुंरश्विनासरंस्वतीन्द्रं॑सुत्रा
मांसुरासोमाँस्त्वामद्य ॥ ६० ॥ त्वामुद्यऽऋंषऽआर्षेयऽऋषीणान्न
पादवृणीतायंऽयजंमानोबहुभ्युऽ आसङ्गंतेभ्यऽएषमेंदेवेषुवसु
वार्य्यायंक्ष्यतऽइतितायादेवादेवदानान्यदुस्तान्यंस्म्माऽआचुशा
स्वाचंगुरस्वेषितश्चहोतरसिंभद्रवाच्यायुप्प्रेषितोमानुषःसूक्तवाका
यंसूक्ताब्रूहि॥ ६१ ॥ इतिश्रीवाजसेनयसंहितायांएकविंशोऽध्यायः
॥ २१ ॥ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ तेजोसिपंचा

ग्नयएकाहिंकारायद्वेतत्सवितुर्दशविभूर्मात्रैकाकायद्वेआन्नर्हसँस्त्वयो
दशशेपादेकैकोन्नविꣳशतिश्चतुस्त्रिꣳशत् ॥ हरिःॐतेजोसिशुक्रम्
मृतंमायुष्पाऽआयुर्म्मेपाहि ॥ देवस्यत्वासवितुःप्प्रसुवेऽश्विनोर्बा
हुब्भ्याम्पूष्णोहस्ताब्भ्यामाददे ॥ १ ॥ इमामगृब्भ्णन् ॥ इमाम
गृब्भ्णन्नृशतामृतस्यपूर्वऽआयुंषिविदथेषुकव्या ॥ सानोऽअस्म्मि
न्त्सुतऽआवभूवऽऋतस्यसामंन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअ
सि ॥ अभिधाऽअसिभुवनमसियन्तासिधर्त्ता ॥ सत्वमग्निंवैश्वान

रꣳसप्प्रथसङ्गच्छस्वाहाकृतꣳ ॥ ३ ॥ स्वगात्वा ॥ देवेभ्यः प्रजापत
येब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यः प्रजापतयेतेनराध्यासम् ॥ तम्ब
धानदेवेभ्यः प्रजापतयेतेनराध्नुहि ॥ ४ ॥ प्रजापतयेत्वा ॥ प्रजाप
तयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजुष्टम्प्रोक्षामिवायवेत्वाजुष्ट
म्प्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामिसर्वेभ्यस्त्वादेवे
भ्योजुष्टम्प्रोक्षामि ॥ योऽअर्वन्तञ्जिघांꣳसतितमभ्यमीतिवरुणः
परोमर्त्तः परःश्वा ॥ ५ ॥ [५] अग्नयेस्वाहा ॥ अग्नयेस्वाहासोमा

यस्वाहापाम्मोदायस्वाहासवित्रेस्वाहावायवेस्वाहाविष्णवेस्वाहेन्द्रा
यस्वाहाबृहस्प्पतयेस्वाहामित्रायस्वाहावरुणायस्वाहा ॥ ६ ॥ [१]
हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दतेस्वाहावक्र
न्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथायस्वाहागन्धायस्वाहाघ्रातायस्
स्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहाव्वल्गतेस्वाहा
सीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्ग्रतेस्वाहाकूजतेस्वा
हाप्प्रबुद्धायस्वाहाव्विजृम्भमाणायस्वाहाविचृतायस्वाहासꣳहाना

यस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥७॥ यते
स्वाहा ॥ यतेस्वाहाधावतेस्वाहोद्द्रावायस्वाहोद्द्रुतायस्वाहाशूका
रायस्वाहाशूकृतायस्वाहानिषण्णायस्वाहोत्थितायस्वाहाजवाय
स्वाहाबलायस्वाहाविवर्त्तमानायस्वाहाविवृत्तायस्वाहाविधून्वा
नायस्वाहाविधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वाहेक्षमा
णायस्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायदत्ति
तस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रङ्करोतितस्मैस्वाहाकु

वृतेस्वाहाकृतायुस्वाहा ॥ ८॥ [२] तत्सवितुः ॥ तत्सवितुर्वरेण्ण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्प्रचोदयात् ॥ ९ ॥ हिरण्ण्यपाणिमूतये सवितारमुपह्वये ॥ सचेत्तादेवतापदम् ॥ १० ॥ देवस्यचेततः ॥ देवस्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिꣳसत्यराधसम् ॥ ११ ॥ सुष्टुतिꣳसुमतीवृधः ॥ सुष्टुतिꣳसुमतीवृधोरातिꣳसवितुरीमहे ॥ प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्पतिम् ॥ रातिꣳसत्पतिम्महेसवितारमुपह्वये ॥ आसवन्देववीतये ॥ १३ ॥

देवस्यसवितुः ॥ देवस्यंसवितुर्म्मतिमासवंविश्वदेव्यम् ॥ धियाभ
गम्मनामहे ॥ १४ ॥ अग्निᳪंस्तोमेन । बोधयसमिधानोऽअमर्त्य
म् ॥ हव्यादेवेषुनोदधत् ॥ १५ ॥ सहव्यवाट् ॥ सहव्यवाडमर्त्यऽ
उशिग्गदूतश्चनोहितः ॥ अग्निर्धियासमृण्वति ॥ १६ ॥ अग्निन्दू
तम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२आसादयादिह ॥ १७ ॥ अजी
जनोहिपवमानसूर्य्यंविधारेशक्मनापयः ॥ गोजीरयारᳪंहमाणः
पुरन्ध्या ॥ १८ ॥ [९] विभूर्म्मात्रा । प्रभूःपित्राश्वोसिहयोस्य

त्यौसिमयोस्यर्व्वासिसार्तिरासिवाज्ज्यसिवृषासिनृमणाऽअसि ॥ ययु
र्न्नामासिशिशुर्न्नामास्यादित्यानाम्पत्वान्न्विहि ॥ देवाऽआशापाला
ऽएतन्देवेब्भ्योश्श्वम्मेधायप्प्रोक्षितꣳरक्षत ॥ इहरन्तिरिहरमतामिह
धृतिरिहस्वधृतिꣳस्वाहा ॥ १९ ॥ [ २ ] कायस्वाहा ॥ कायस्वाहा
कस्म्मैस्वाहाकतमस्म्मैस्वाहास्वाहाधिमाधीतायस्वाहामनःप्प्र
जापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै
सुम्मृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यै

बृहत्यैस्वाहापूष्णोस्वाहापूष्णोप्रपथ्यायस्वाहापूष्णोनरन्धिषाय
स्वाहात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहाविष्णवे
स्वाहाविष्णवेनिभूयपायस्वाहाविष्णवेशिपिविष्टायस्वाहा ॥ २० ॥
विश्वोदेवस्य । नेतुर्म्मर्त्तोवुरीतसख्यम् । विश्वोरायऽइषुध्यतिद्युम्नं
वृणीतपुष्यसेस्वाहा ॥ २१ ॥ [ १ ] आब्रह्मन् ॥ आब्रह्मन्ब्राह्म
णोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहा
रथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिःपुरन्धिर्य्योषा

जि॒ष्णू र॑थे॒ष्ठाः स॒भेयो॒ युवा॒स्य यज॑मानस्य वी॒रो जा॑यतान्नि॒कामे॑नि॒कामे॑न नः प॒र्जन्यो॑ वर्षतु॒ फल॑वत्यो न॒ऽओष॑धयः पच्यन्तां योगक्षे॒मो नः॑ कल्पताम् ॥ २२ ॥ [ १ ] प्रा॒णाय॒ स्वाहा॑ । ऽपा॒नाय॒ स्वाहा॑ व्या॒नाय॒ स्वाहा॒ चक्षु॑षे॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॑ वा॒चे स्वाहा॒ मन॑से॒ स्वाहा॑ ॥

॥ २३ ॥ [१] प्राच्यै॑ दि॒शे । स्वाहा॒ऽर्वाच्यै॑ दि॒शे स्वाहा॒ दक्षि॑णायै दि॒शे स्वाहा॒ऽर्वाच्यै॑ दि॒शे स्वाहा॑ प्र॒तीच्यै॑ दि॒शे स्वाहा॒ऽर्वाच्यै॑ दि॒शे स्वाहोदी॑च्यै दि॒शे स्वाहा॒ऽर्वाच्यै॑ दि॒शे स्वाहो॒र्ध्वायै॑ दि॒शे स्वाहा॒ऽर्वाच्यै॑ दि॒शे स्वाहा

वोर्च्यैदिशेस्वाहार्वोर्च्यैदिशेस्वाहा ॥ २४ ॥ [१] अद्भ्यःस्वाहावा
र्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहा
स्यन्दमानाभ्यःस्वाहाकूप्याभ्यःस्वाहासूद्याभ्यःस्वाहाधा
र्य्याभ्यःस्वाहार्णवायस्वाहासमुद्रायस्वाहासरिरायस्वाहा २५
[१] वातायस्वाहा। धूमायस्वाहाभ्रायस्वाहामेघायस्वाहाविद्यो
तमानायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षते
स्वाहोग्ग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वाहा

प्पुष्ष्णतेस्वाहांशीकायतेस्वाहाप्पुष्ष्वाब्भ्यःस्वाहान्ह्रादुनीब्भ्यःस्वाहानीहारायस्वाहा ॥ २६ ॥ [ १ ] अग्नयेस्वाहा ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहा दिवेस्वाहादिग्ग्भ्यःस्वाहाशाब्भ्यःस्वाहोर्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ [ १ ] नक्षत्रेब्भ्यःस्वाहा ॥ नक्षत्रियेब्भ्यःस्वाहाहोरात्रेब्भ्यःस्वाहार्द्धमासेब्भ्यःस्वाहामासेब्भ्यःस्वाहाऋतुभ्यःस्वाहार्त्तवेब्भ्यःस्वाहासंवत्सरायस्वाहाद्यावापृथिवीब्भ्याᳪस्वाहाचन्द्रायस्वा

हांसरीसृपेभ्यःस्वाहां ॥२९॥ [१] असंवेस्वाहां ॥ असंवेस्वाहावसंवे
स्वाहांविभुवेस्वाहांविवस्वतेस्वाहांगणश्रियेस्वाहांगणपंतयेस्वाहांभि
भुवेस्वाहाधिपतयेस्वाहांशुषायस्वाहांसꣳसर्प्पायस्वाहांचन्द्रायस्वा
हाज्ज्योतिषेस्वाहांमलिम्म्लुचायस्वाहादिवांपतयंतेस्वाहां ॥ ३० ॥
[१] मधंवेस्वाहां ॥ मधंवेस्वाहामाधंवायस्वाहांशुक्रायस्वाहाशुचंये
स्वाहानभंसेस्वाहांनभुस्यायस्वाहेषायस्वाहोर्ज्जायस्वाहासहंसेस्वाहा
सहस्यायस्वाहातपंसेस्वाहांतपस्यायस्वाहाꣳहसस्प्पतयेस्वाहां ॥३१॥

[१] वाजा॑य॒स्वाहा॑ । प्प्र॒स॒वाय॒स्वाहा॑पि॒जाय॒स्वाहा॒क्क्रत॑वे॒स्वाहा॒स्व॒÷
स्वाहा॑मू॒र्द्ध्ने॒स्वाहा॒व्य॑श्नु॒वि॑ने॒स्वाहान्त्या॑य॒स्वाहान्त्या॑यभौव॒नाय॒
स्वाहा॒भुव॑नस्य॒पत॑ये॒स्वाहाधि॑पतये॒स्वाहा॑प्प्र॒जाप॑तये॒स्वाहा॑ ॥ ३२ ॥
[१] आयु॑र्य्य॒ज्ञेन॑ । कल्पता॒ᳬ स्वाहा॑प्प्रा॒णोय॒ज्ञेन॑कल्पता॒ᳬ स्वाहा॑
पा॒नोय॒ज्ञेन॑कल्पता॒ᳬ स्वाहा॒व्या॒नोय॒ज्ञेन॑कल्पता॒ᳬ स्वाहो॑दा॒नोय॒
ज्ञेन॑कल्पता॒ᳬ स्वाहा॑सम॒ानोय॒ज्ञेन॑कल्पता॒ᳬ स्वाहा॒चक्षु॒र्य्य॒ज्ञेन॑
कल्पता॒ᳬ स्वाहा॒श्श्रोत्र॑ᳬ य॒ज्ञेन॑कल्पता॒ᳬ स्वाहा॒वाग्य॒ज्ञेन॑कल्प

तांᳫँस्वाहामनोयज्ञेनंकल्पताᳫँस्वाहात्क्मायज्ञेनंकल्पताᳫँस्वा
हांब्रह्मायज्ञेनंकल्पताᳫँस्वाहाज्योतिर्य्यज्ञेनंकल्पताᳫँस्वाहास्व
र्य्यज्ञेनंकल्पताᳫँस्वाहापृष्ठंर्य्यज्ञेनंकल्पताᳫँस्वाहांयज्ञोयज्ञेनंक
ल्पताᳫँस्वाहा॥३३॥एकस्मैस्वाहाद्वाभ्याᳫँस्वाहाशतायस्वाहै
कशतायस्वाहाव्युष्ट्यैस्वाहास्वर्ग्गायस्वाहा ॥ ३४ ॥ [ १ ] इतिश्री
वाजसनेयसंहितायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ हिरण्यगर्भोयः प्राणतोद्वि

कौयुजंत्यष्टौवायुश्चापंचप्राणायतिस्त्रउत्सक्क्थ्याद्वादशगायत्री
स्त्वापङ्क्तौकःस्विदष्टौकास्विद्दशसुभूःस्वयंभूस्तिस्त्रएकादशपंचष
ष्टिः ॥ हरिःॐ हिरण्यगर्भःसम ॥ हिरण्यगर्भःसमवर्त्ततागे्र
भूतस्यंजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै
देवायहविषाविधेम ॥१॥ उपयामगृहीतोसि । प्रजापतयेत्वाजुष्टं
गृह्णाम्म्येषतेयोनिःसूर्य्यस्तेमहिमा ॥ यस्तेहन्त्संवत्सरेमहिमासं
म्बभूवयस्तेवायावन्तरिक्षेमहिमासम्बभूवयस्तेदिविसूर्य्येमहिमा

म्परितस्त्थुषं÷ ॥ रोचन्तेरोचनादिवि ॥ ५ ॥ युञ्जन्त्यस्य ॥ युञ्ज
न्त्यस्यकाम्म्याहरीव्विपक्षसारथे ॥ शोणाधृष्ण्णूनृवाहसा ॥ ६ ॥
यद्वातं÷ ॥ यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्यतन्न्वम् ॥ एतᳬ
स्तोतरनेनपथापुनरश्श्वमावर्त्तयासिनᳫ ॥ ७ ॥ व्वसवस्त्वा । ञ्जन्तु
गायत्रेणच्छन्दसारुद्रास्त्वाञ्जन्तुत्रैष्टुभेनच्छन्दसादित्यास्त्वाञ्ज
न्तुजागतेनच्छन्दसा ॥ भूर्भुवᳫस्वर्लाजी ३ च्छाँची ३ व्यव्येग
व्यंऽएतदन्नमत्तदेवाऽएतदन्नमद्धिप्रजापते ॥ ८ ॥ कᳫस्वित् ॥ कᳫ

स्विदेकाकीचंरतिकऽउंस्विज्जायतेपुनं÷ ॥ किꣳस्विद्धिमस्यंभेषुज
ङ्किम्म्वावपंनम्म्महत् ॥ ९ ॥ सूर्य्यंऽएकाकी । चंरतिचन्द्रमांजाय
तेपुनं÷ ॥ अग्निर्हिमस्यंभेषजम्भूमिंरावपंनम्महत् ॥ १० ॥ का
स्वित् ॥ कास्विदासीत्पूर्वचित्तिंꣳकिꣳस्विदासीद्बृहद्वयं÷ ॥ कास्वि
दासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ११ ॥ द्यौरांसीत् ॥
द्यौरांसीत्पूर्वचित्तिरश्वंऽआसीद्बृहद्वयं÷ ॥ अविंरासीत्पिलिप्पिला
रात्रिंरासीत्पिशङ्गिला ॥ १२ ॥ [८] वायुष्ट्वां । पचुतैरंवतुत्वासिंतग्ग्री

वृक्षश्छागैर्न्यग्रोधश्च मसैश्शाल्मलिर्वृद्ध्यां ॥ एषस्यराथ्योवृषापड्भि
श्चतुर्भिरेदगन्ब्रह्माकृष्णश्चनोवतु नमोग्नये ॥ १३ ॥ सꣳशितो
रश्मिना । रथꣳसꣳशितोरश्मिनाहयः ॥ सꣳशितोऽअप्स्वप्सु
जाब्रह्मासोमपुरोगवः॥१४॥स्वयंवाजिन् ॥ स्वयंवाजिंस्तन्वंकल्पय
स्वस्वयंयजस्वस्वयञ्जुषस्व॥ महिमातेन्येननसन्नशे ॥१५॥ नवै ॥
नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ २ ऽइदेषिपथिभिःसुगेभिः
यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु ॥१६॥ अग्निः

का ॥ २२ ॥ यकोसकौ । शंकुन्तकऽआहलगितिवञ्चति ॥ विवक्ष
तऽइवतेमुखमर्द्धच्यौंमानस्त्वमभिभांषथाः ॥ २३ ॥ माताचं । ते
पिताचतेग्ग्रेंवृक्षस्यंरोहतः ॥ प्रतिलामीतितेपिताग्भेमुष्टिमतꣳस
यत् ॥ २४ ॥ माताचं । तेपिताचतेग्ग्रेंवृक्षस्यंक्रीडतः ॥ विवंक्षतऽ
इवतेमुखम्ब्रह्मन्मात्वंवंदोबहु ॥ २५ ॥ ऊर्द्ध्वामेंनाम् ॥ ऊर्द्ध्वामेंना
मुच्छ्रांपयगिरौभारꣳहरंन्निव ॥ अथांस्यैमद्ध्यमेधताꣳशीतेवातेपुन
न्निव ॥ २६ ॥ ऊर्द्ध्वमेंनम् ॥ ऊर्द्ध्वमेंनमुच्छ्रंयताद्गिरौभारꣳहरंन्निव ॥

अथास्यमद्ध्यमेजतुशीतेवातेपुनन्निव ॥ २७ ॥ यदेस्या॰ ॥ यदेस्याऽ
अꣳहुभेद्यां॰कृधुस्थूलमुपातंसत् ॥ मुष्काविदस्याऽएजतोगोशफेशं
कुलाविव ॥ २८ ॥ यद्देवास॰ ॥ यद्देवासोललामंगुम्प्राविष्टीमिनमा
विषु॰ ॥ सक्थनादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥ २९ ॥ यद्ध
रिण॰ ॥ यद्धरिणोयवमत्तिनपुष्टम्पशुमन्यते ॥ शूद्रायदर्य्यजारान
पोषायधनायति ॥ ३० ॥ यद्धरिणोयवमत्तिनपुष्टम्बहुमन्यते ।
शूद्रोयदर्य्यायैजारोनपोषमनुमन्यते ॥ ३१ ॥ दधिक्राव्णोऽअका

रिषाञ्जिष्णोऽरश्श्वस्यवाजिनं॑ ॥ सुरभिनोमुखाकरत्प्रणऽआयूऽंषि
तारिषत् ॥ ३२ ॥ [१२] गायत्रीत्रिष्टुप् ॥ गायत्रीत्रिष्टुब्जगत्य
नुष्टुप्पङ्क्त्यासह॥बृहत्युष्णिहाककुप्सूचीभिं॑शम्म्यन्तुत्वा॥३३॥
द्विपदायाः ॥ द्विपदायाश्चतुष्पदास्त्रिपदायाश्चषट्पदाः ॥ विच्छ
न्दायाश्चसच्छन्दाःसूचीभिं॑शम्म्यन्तुत्वा ॥ ३४ ॥ महानाम्न्यो
रेवत्यं॑ ॥ महानाम्न्योरेवत्योविश्वाऽआशाः प्प्रभूवरीः ॥ मैघी
र्विद्युतोवाचं॑सूचीभिं॑शम्म्यन्तुत्वा ॥ ३५ ॥ नार्य्यस्तेपत्न्योलो

मुविचिँस्वन्तुमनीषया ॥ देवानाम्पत्न्योदिशः सूचीभिः शम्म्य
न्तुत्वा ॥ ३६ ॥ रजताहरिणीः । सीसायुजौयुज्यन्तेकर्म्मभिः ॥
अश्वस्यवाजिनस्त्वचिसिमाःशम्म्यन्तुशम्म्यन्तीः ॥ ३७ ॥ कुवि
दङ्ग । यवमन्तोयवंञ्चिद्यथादान्त्यनुपूर्व्वंवियूय ॥ इहेहैषाङ्कृणुहि
भोजनानियेबर्हिषोनमउक्तिंय्यजन्ति ॥ ३८ ॥ [ ८ ] कस्त्वा ॥
कस्त्वाछ्यतिकस्त्वाविशास्तिकस्तेगात्राणिशम्म्यति ॥ कउतेशमि
ताकविः ॥ ३९ ॥ ऋतवस्ते ॥ ऋतवस्तऽऋतुथापर्वशमितारोविशा

देवसखुयदुित्वमत्त्रमनसाजगन्थ ॥ येषुविष्णुस्त्रिषुपदेष्ष्वेष्टुस्ते
षुविश्वम्भुवनुमाविवेशाँ३ ॥ ४९ ॥ अपितेषु ॥ त्रिषुपदेष्ष्वस्मिन्नुये
षुविश्वम्भुवनमाविवेश ॥ सद्यश्पर्य्यैमिपृथिवीमुतद्यामेकेनाङ्गेन
दिवोऽअस्यपृष्ठम् ॥५०॥ केष्ष्वन्तश् ॥ पुरुषऽआविवेशकान्यन्तश्
पुरुषेऽअर्प्पितानि ॥ एतद्ब्रह्मन्नुपवल्हामासित्वाकिꣳस्विन्नुःप्रति
वोचास्यत्र ॥ ५१ ॥ पञ्चस्वन्तश् । पुरुषऽआविवेशुतान्यन्तश्पुरु
षेऽअर्प्पितानि ॥ एतत्त्वात्रप्प्रतिमन्न्वानोऽअस्मिन्नमायययाभव



॥ २७ ॥

स्युत्तरोमत् ॥ ५२ ॥ [८] कास्वित् ॥ कास्विदासीत्पूर्व्वचित्तिꣳ
किꣳस्विदासीद्बृहद्वयं÷ ॥ कास्विदासीत्पिलिप्पिलाकास्विदासी
त्पिशङ्गिला ॥ ५३ ॥ द्यौरासीत् ॥ द्यौरासीत्पूर्व्वचित्तिरश्वंऽआसी
द्बृहद्वयं÷ ॥ अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥५४॥
काऽईम् ॥ काऽईमरेपिशङ्गिलाकाऽईंकुरुपिशङ्गिला ॥ कईमा
स्कन्दमर्षतिकऽईम्पन्थांविसर्प्पति ॥ ५५ ॥ अजारे । पिशङ्गिला
श्वावित्कुरुपिशङ्गिला ॥ शशऽआस्कन्दमर्षत्यहिःꣳपन्थांविसर्प्पं

ति ॥ ५६ ॥ कत्यस्य । विष्ठाः कत्यक्षराणि कतिहोमाः सङ्कतिधा समिद्धः ॥ यज्ञस्यत्वा विदथा पृच्छमत्र कतिहोतारऽऋतुशो यजन्ति ॥ ५७ ॥ षडस्य ॥ विष्ठाः शतमक्षराण्यशीतिर्होमाः सामिधो हतिस्रः ॥ यज्ञस्यते विदथा प्रब्रवीमि सप्तहोतारऽऋतुशो यजन्ति ॥ ५८ ॥ कोऽअस्य । वेदभुवनस्य नाभिङ्को द्यावापृथिवीऽअन्तरिक्षम् ॥ कः सूर्यस्य वेद बृहतो जनित्रङ्को वेद चन्द्रमसंयतो जाः ॥ ॥ ५९ ॥ वेदाहम् ॥ वेदाहमस्य भुवनस्य नाभिं वेद द्यावापृथिवीऽ

अन्तरिक्षम् ॥ वेदसूर्य्यस्यबृहतोजनित्रमथोवेदचन्द्रमसंय्यतो
जाः ॥ ६० ॥ पृच्छामित्वा ॥ पृच्छामित्वापरमन्तंम्पृथिव्याःपृ
च्छामियत्रभुवनस्यनाभिः ॥ पृच्छामित्वावृष्णोऽअश्वस्यरेतः
पृच्छामिवाचःपरमंव्योम ॥ ६१ ॥ इयंवेदिः ॥ इयंवेदिःपरो
अन्तः पृथिव्याऽअयंय्यज्ञोभुवनस्यनाभिः ॥ अयꣳसोमोवृ
ष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥ ६२ ॥ [१०] सुभूः
स्वयम्भूः । प्रथमोन्तर्म्महत्यर्णवे ॥ दधेहगर्भमृत्वियंय्यतोजा

तश्प्रजापतिः ॥ ६३ ॥ होतायक्षत् ॥ होतायक्षत्प्रजापतिꣳसोमं स्यमहिम्नः ॥ जुषताम्पिबतुसोमꣳहोतर्य्यज ॥ ६४ ॥ प्रजापतेन । त्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्त न्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् ॥ ६५ ॥ [३] इतिश्रीवाजस नेयसंहितायांत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ श्रीवेदपुरुषायनमः ॥

अनुवाकसूत्रम् ॥ अश्वस्तूपरोधूम्रान्वसंतायसमुद्रायशिशुमारान्म युःप्राजापत्योदशकाश्चत्वारश्चत्वारिꣳशत् ॥ हरिःॐअश्वस्तूपरः ॥

अश्वस्तूपरोगोमृगस्तेप्राजापत्याःकृष्णग्ग्रीवऽआग्नेयोरराटेंपुर
स्तात्सारस्वतीमेष्यधस्ताद्धन्वोराश्विनावधोरामौबाह्वोःसौमापौ
ष्णःश्यामोनाभ्याःसौर्य्ययामौश्वेतश्चकृष्णश्चपार्श्वयोस्त्वा
ष्ट्रौलोमशसक्थौसक्थ्योर्वायव्यः श्वेतःपुच्छऽइन्द्रायस्वपस्यायवे
हद्वैष्णवोवामनः ॥ १ ॥ रोहितोधूम्ररोहितः ॥ कर्कन्धुरोहितस्ते
सौम्याबभ्रुररुणबभ्रुःशुकबभ्रुस्तेवारुणाःशितिरन्ध्रोन्यतः शि
तिरन्ध्रःसमन्तशितिरन्ध्रस्तेसावित्राःशितिबाहुरन्यतः शितिबा

हुः समन्तशितिबाहुस्तेबार्हस्पत्याःपृषतीक्षुद्रपृषतीस्थूलपृषती
तामैत्रावरुण्यः॥२॥शुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्वि
नाः श्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्ण्णायामाऽअवलि
प्तारौद्रानभोरूपाः पार्ज्जन्याः॥३॥पृश्निस्तिरश्चीनपृश्निः॥पृश्नि
स्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्तेमारुताःफल्गूर्लोहितोर्णीपलक्षीताःसा
रस्वत्यःप्लीहाकर्ण्णःशुण्ठाकर्ण्णोद्ध्यालोहकर्ण्णस्तेत्वाष्ट्राःकृ
ष्णग्रीवःशितिकक्षोञ्जिसक्थस्तऽऐन्द्राग्नाःकृष्णाञ्जिरल्पाञ्जि

र्म्महाञ्जिस्तऽउंपस्याः ॥ ४ ॥ शिल्पावैश्वदेव्यः ॥ शिल्पावैश्वदेव्योरोहिण्यस्त्र्यवयोवाचेविज्ञाताऽ अदित्यैसरूपाधात्रेवत्सतर्यो देवानाम्पत्नीभ्यः ॥५॥ कृष्णग्रीवाआग्नेयाः । शितिभ्रवोवसूनांरोहितारुद्राणांश्वेताऽअवरोकिणऽ आदित्यानान्नभोरूपाः पार्ज्जन्याः ॥ ६ ॥ उन्नतऽऋषभः ॥ उन्नतऽऋषभोवामनस्तऽऐन्द्रावैष्णवाऽउन्नतःशितिबाहुः शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याःशुकरूपावाजिनाःकल्माषाऽआग्निमारुताःश्यामाःपौष्णाः ॥

॥ ७ ॥ एतांऽऐन्द्राग्नाः ॥ एतांऽऐन्द्राग्नाद्विरूपाऽअग्नीषोमी
यांवामनाऽअनड्वाहऽ आग्नावैष्णवावशामैत्रावरुण्योन्यतऽए
न्योमैत्र्यः ॥ ८ ॥ कृष्णग्रीवाऽआग्नेयाः ॥ कृष्णग्रीवाऽआ
ग्नेयाबभ्रवः सौम्याः श्वेतावायव्याऽ अविज्ञाताऽअदित्यैसरू
पाधात्रेवत्सतर्योदेवानाम्पत्नीभ्यः ॥ ९ ॥ कृष्णाभौमाः ॥
कृष्णाभौमाधूम्राआन्तरिक्षाबृहन्तोदिव्याः शबलावैद्युताः सि
ध्मास्तारकाः ॥ १० ॥ [१०] धूम्रान्वसन्ताय ॥ धूम्रान्वस



॥ ३१ ॥

न्तायालभंतेश्वेतान्ग्रीष्मायकृष्णान्वर्षाभ्योरुणाञ्छरदेपृषंतो
हेमन्तायपिशङ्गाञ्छिशिराय॥११॥त्र्यवयोगायत्र्यै। पञ्चावयस्त्रि
ष्टुभेदित्यवाहोजगत्यैत्रिवत्साऽअनुष्टुभेतुर्य्यवाहऽउष्णिहे॥१२॥
पष्ठवाहोविराजे॥ पष्ठवाहोविराजऽउक्षाणोबृहत्याऽऋषभाःककु
भेनड्वाह÷पङ्क्त्यैधेनवोतिच्छन्दसे॥१३॥कृष्णग्रीवाऽआग्नेयाः॥
कृष्णग्रीवाऽआग्नेयाबभ्रव÷सौम्म्याऽउपध्वस्ताःसावित्रावत्स
तर्य्य÷सारस्वत्य÷श्यामाःपौष्णाःपृश्नयोमारुताबहुरूपावैश्वदे

वाव्वशाद्यावापृथिवीयाः॥ १४॥ उक्ताः संञ्चराः ॥ उक्ताः संञ्चराऽएता
ऽऐन्द्राग्ग्नाः कृष्णावारुणाः पृश्नयोमारुताः कायास्तूपराः ॥ १५ ॥
अग्नयेनीकवते प्प्रथमजानालभतेमरुद्भ्यः सान्तपनेभ्यः सवात्या
न्मरुद्भ्योगृहमेधिभ्योबष्किहान्मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्म
रुद्भ्यः स्वतवद्भ्योनुसृष्टान् ॥ १६ ॥ उक्ताः संञ्चराः ॥ उक्ताः संञ्चराऽए
ताऽऐन्द्राग्ग्नाः प्प्राशृङ्गामाहेन्द्राबहुरूपाबैश्वकर्म्मणाः ॥ १७ ॥ धू
म्म्राबभ्रुनीकाशाः ॥ पितृणाꣳसोमवताम्बभ्रवोधूम्म्रनीकाशाः

